❀ श्रीः ❀

# दुर्गाभ्युदयनाटकम्

(संस्कृत-टिप्पण-सहितम्)

लेखक

महामहोपाध्याय पण्डित छज्जूराम शास्त्री 'विद्यासागर'

प्रकाशक

सुमेर ब्रादर्स एण्ड कम्पनी

बिरला लाइन्स, दिल्ली-६

❀ अथ ❀

# दुर्गाभ्युदयनाटकम् ।

## [संकेतसहितम्]

या सम्यग् विधिविधुशङ्करैर्न बुद्धा
शुद्धान्तःकरणविशिष्टभक्तवेद्या ।
सानन्दं विहरति या गृहे मणीनां
भव्यार्थं भवतु ममाद्य साऽद्य देवी ॥१॥

---

गणाधीशं नमस्कृत्य मामकी-मोक्षरामकौ ।
भूलया-मूलचन्द्रं च शिवया सहितं शिवम् ॥ १ ॥
वेदवेदाङ्गविदुषा सर्वशास्त्रार्थवादिना ।
विद्याब्धिकविरत्नाङ्कछज्जूरामेण शास्त्रिणा ॥२॥
महामहोपाध्यायेन छात्रार्थं स्वस्य नाटके ।
हर्तुं पदानां काठिन्यं संकेतः क्रियतेऽधुना ॥३॥

अथ—प्रारिप्सितस्य दुर्गाभ्युदयनाटकस्य निर्विघ्नपरिसमाप्तिकामनया स्वेष्टदेवतास्मरणरूपं मङ्गलं नान्द्या निबध्नाति—येति ।

या देवी विधि र्विधाता ब्रह्मे तियावत् । विधु र्विष्णुः । "विश्वम्भरः कैटभजिद्विधुरि" ति विष्णुनामस्वमरः । शङ्करो महेशस्तैःसम्यक् साकल्येनेत्यर्थः । न बुद्धा नैव विज्ञाता । केवलं तु—शुद्धचित्तवृत्तिभक्तैर्वेद्या । या च सानन्दं मणिगृहेविहरति । सा लोकवेदप्रसिद्धाद्यदेवी मम ग्रन्थकर्तुः श्रोतुर्वक्तुश्च तथा भव्यार्थं कल्याणाय, भवत्विति प्रार्थने लोट् । नान्दीश्लोकत्वादस्यादौ मगणः । "क्षेमं सर्वगुरुर्दत्ते मगणो

( नान्द्यन्ते )

सूत्रधारः—(नेपथ्याभिमुखमवलोक्य)

मारिष, इतस्तावत् ।

पारिपार्श्वकः—भाव, अयमस्मि ।

सूत्रधारः—मारिष,

एषा—सकलगुणप्राज्या, विद्वत्समज्या, पूर्ववर्तिनां लब्धकीर्तीनां कवीनां दृष्टरसप्रबन्धापि निबन्धान्तरं द्रष्टुमना मनागपि न विलम्बयति

तदयमहमधुना—पवित्रकुरुक्षेत्रमध्ये, रिटोलीग्राम-वासिना इन्द्रप्रस्थप्रवासिना, भगवदत्रिगोत्रीयलब्धप्रशंसेन, गौड़वंशावतंसेन,

---

भूमिर्दैवत" इति भामहोक्तेः। नान्द्यन्त-इति। नन्दयति देवानिति नान्दी। रङ्गविघ्नोपशान्तये नटैः क्रियमाणो मङ्गलाचरणविशेषः।

सूत्रेति। सूत्रधारलक्षणमुक्तं भरते—"नाट्यस्य यदनुष्ठानं तत्सूत्रं स्यात्सबीजकम्। रङ्गदैवतपूजाकृत्सूत्रधार उदीरितः।" नेथ्याभिमुखमिति। नेपथ्यं रङ्गभूमिः। मारिषो नटः। नटः सूत्रधारेण मारिष इतिवाच्यः। 'सूत्री नटेन भावेति तेनासौ मारिषेति च' इत्युक्तत्वात्। पारिपार्श्वकइति। तल्लक्षणमपि च भरते—'सूत्रधारस्य पार्श्वे यः प्रवचन् कुरुतेऽर्थनाम्। काव्यार्थसूचनालापं स भवेत्पारिपार्श्वकः।" सकलगुणैः प्राज्या बहुला, विद्वत्समज्या—विद्वत्परिषत्। मनागल्पमपि, न विलम्बयति।

"पांसवोपि कुरुक्षेत्रे वायुना समुदीरिताः। अपि दुष्कृतकर्माणं नयन्ति परमां गतिम्।" इत्यादि वाक्यप्रमाणादाह पवित्रकुरुक्षेत्रेति। रिटोलीग्रामेति। अयं ग्रामः करनाल प्रान्ते लगति—जींदनगरात्पूर्वभागे द्वादश क्रोशे वर्तते।

पण्डित-मोक्षराम-तनूजेन, सती-मामकीदेवी-गर्भजेन, कर्मकाण्ड-महोपाध्यायपण्डितमूलचन्द्रानुजेन, पण्डितनेकीराम—पण्डितराम-कृष्णभट्टाग्रजेन, संपादितसकलनित्यक्रियेण, श्रीमतीभक्तिदेवीप्रियेण, महामहोपाध्याय-विद्यासागर-पदालंकृतेन, पण्डित छज्जूराम-शास्त्रिणा, कविरत्नेन, राजदयोपनत-हृदयोपेत-मुनिनोपश्रावितं दुर्गाचरित्र-माश्रित्य ग्रथितं दुर्गाभ्युदयं नाम नाटकमादायोपतिष्ठे ।

पारिपार्श्वकः—भाव, किमपि शङ्के ।

सूत्रधारः—का नाम शङ्का ?

पारिपार्श्वकः—स कविः तार्किकोपि श्रूयते, कवित्वतार्किक-त्वयोश्च प्रायो वैय्यधिकरण्यमालोक्यते ।

सूत्रधारः—मारिष, न विशिष्टयुक्तिमती भवदुक्तिः ।

यतः—कर्कशे तर्कविषये कोमले काव्यवस्तुनि ।
समं लीलायते तस्य छज्जूरामस्य भारती ॥२॥

अत्र हि—
अगाधे तार्किकत्वेऽपि कवितावाग्विलासिनौ ।
यशस्विनौ हर्षमिश्र-जयदेवौ, निदर्शनम् ॥३॥

किंचास्य कवेरियं प्रसिद्धिः—

---

शंके तर्कयामि, प्रायो बाहुल्येन, "प्रायो वयसि बाहुल्ये" इति वैजयन्ती । कर्कशे कठिने । तस्य न्यायसिद्धान्तमुक्तावलीटीका-मूलचन्द्रिका, न्यायसूत्रवृत्ति, साहित्य-विन्दु संस्कृतसाहित्येतिहास-निरुक्तमहाभाष्यटीका प्रभृतिग्रंथकर्तृत्वेन प्रसिद्धस्य, भारती-सरस्वती, प्रतिभेतियावत् ।

हर्षमिश्रो नैषधमहाकाव्य-खाद्यखण्डनादिकर्ता ।। जयदेवः तत्वचिन्तामण्यालोक,

छज्जूरामकृतौ नैकं गद्यं पद्यं च दृश्यते ।
अल्पाऽनल्पाथवा काचिद्यत्र नैव चमत्कृतिः ॥४॥

अनुप्रासिनिसंदर्भे छज्जूरामसमोऽद्य कः ।
पुराप्यासन्न चेदासन् द्वित्रा एव कवीश्वराः ॥५॥

पारिपार्श्वकः—भाव, किमपि वस्तु प्रस्तुतयुक्तिं विना न प्रेक्षावद्भिरपेक्षणीयं भवति विशेषतो नूतनविज्ञानोन्मीलितलोचनै र्मादृशजनैरिति दृढ़तरयुक्तिं विना नाहं तव वचसि श्रद्दधे ।

सूत्रधारः—शृणु ।

अनल्पमृदुभिस्तल्पमस्तु वस्त्रैरलंकृतम् ।
दर्भास्तृतं भूतलं वा सत्याः पत्यौ रतिः समा ॥६॥

किंच—

याभ्यामालिंग्यते कान्ता, कराभ्यामतिकोमला ।
ताभ्यामेवातिकठिना नारोप्यन्ते शराः किमु ? ॥७॥

पारिपार्श्वकः—भाव, युक्तमुक्तं भवता । राजदयोपनतहृदयोपेतमुनिनोपश्रावितमिति वृत्तान्तः कौतुकं मे कन्दलयति ।

सूत्रधारः—मारिष, शृणु ।

---

प्रसन्नराघवनाटक, चन्द्रालोक, प्रभृतिग्रन्थकर्ता, कृतौ—काव्ये नाटकेच, चमत्कृतिरानन्दविशेषः । पुरा प्रागपि, नासन्ना भूवन् संदर्भें गद्ये पद्येवा । प्रेक्षावदपेक्षणीयं विद्वन्मान्यम् श्रद्दधे-श्रद्धां कुर्वे श्रदन्तरोरुपसर्गवद्वृत्तिः । तल्पमिति—"तल्पं शय्या, तल्पं शयनीये स्या" दिति धरणिः । सत्याः पतिव्रताया स्त्रियः । रतिः सुरतं "रतिःसुरतगुह्ययो" रितिमेदिनी । कान्ता कामिनी । आलिंग्यते-स्पृश्यते, ताभ्यां कराभ्यां, कठिनादपिकठिनाः शराः वाणाः न आरोप्यन्ते-धार्यन्ते, किम् ? अपितु धार्यन्त एवेत्यर्थः । कौतुक माश्चर्यम्, कन्दलयति जनयति ।

यो वै महात्मा सकले महीतले वन्द्यः समस्तैः सुरथो नृपैरथो ।
क्षत्रर्षभः चैत्रकुलाब्धिचन्द्रः सोऽरातिवर्गेण जितः क्षितीन्द्रः ॥८॥

पारिपार्श्वकः—भाव, श्रुत-पूर्वं मयैतद् वृत्तं पुराविद्भ्यः परन्तु न संप्रति स्मर्यते ।

सूत्रधारः—शृणु । कोलाविध्वंसिभिः शत्रुभिर्हृतसर्वस्वः स क्षितीश्वरः 'साम्प्रतं मे गृहे स्थातु मसाम्प्रत'' मिति मनसि कृत्वा मृगया-व्याजेन वातरयं हयं समारुह्य तपोवनं प्रतिययौ ।

पारिपार्श्वकः—ततस्ततः ?

सूत्रधारः—(तपोवनमवलोक्य) ''अहो रमणीयोऽयमाश्रमः प्रशान्तश्च । दृष्ट्वेमं जाता काचिन्मे निर्वृतिः तदत्रावश्यं किंचिद्विश्रमितव्यमिति'' मुनेराश्रमं प्रविवेश । (तत्र मुनिमवलोक्य) ''हन्त ! दुरन्त-तपसापहतकिल्विषततिः कश्चन यतिरपीह दृश्यते । तत्सर्वथा जातं ममात्र सफलमागतम् । इति विचार्योपसृत्य च प्रहृष्टमना मुनिं प्रणनाम । मुनिना तेनानुमतः सत्कृतश्च वनमितस्ततोऽवलोकयामास । अहो पूर्वं महोदया अपि शत्रुणाक्रान्ता मम पुत्रकान्तादयः संप्रति कथमिव वर्तन्त इति यावद्विचारयति तावत्पुरो दृष्ट्वा ''अये, कोऽयमत्र पवित्र-

---

वन्द्योवन्दनीयः क्षत्रर्षभः क्षत्रिय श्रेष्ठः स । सुरथः सुरथनामा नृपः, अरातिवर्गेण शत्रुसमूहेन, पुराविद्भ्यः पुराणज्ञेभ्यः 'पुरापुराणेनिकटे'' इत्यमरः । कोलेति । एतन्नामकैरित्यर्थः । सांप्रतमद्य, गृहे स्थातुम् असाम्प्रतमयुक्तम् । मृगयाव्याजेन मृगया शिकार इतिभाषा-वातरयं-वायुसदृशवेगम् हयमश्वम् इममाश्रमम्, निर्वृतिः-आनन्दः, तदत्र आश्रमे आगतमागमनम्, भावे क्तः, प्रणनाम प्रणाममकरोत् ,सत्कृत आदृतः अवलोकयामास ददर्श, पुरोऽग्रे, अत्र-आश्रमे पवित्रो धीरश्चयः समीरो वायुः तस्य स्पर्शंहर्षम् ।

धीरसमीरस्पर्शहर्षमनुभवन्नास्ते, किंच श्रेष्ठाकृतिरपि विभाव्यमानशोकविकृतिः तत्सर्वथापीह न युज्यते। यतः—

मुनिसंनिधिमप्यागतो भवति न कश्चन तापी।
शिवनामस्मृतितो यथा तरति महानपि पापी ॥९॥

अथवा मुनिसंनिधावेष गत एव न, यतः—

सकलपदार्थाः सन्ति यद्यप्यधिभुवस्तलम्।
किन्तुभाग्यरहितो जनो नो तान् लब्धुमलम् ॥१०॥

(प्रकाशम्) भद्र, को भवान्, किमत्र जनसङ्गरहिते मृगहिते घोरप्रचारे कान्तारे तव संचार-कारणम्। कथमाकृत्यापि मुग्धस्त्वं शोकदग्ध इव लक्ष्यसे इति पप्रच्छ।

पारिपार्श्वकः—किमाह वैश्यः।

सूत्रधारः—एवं पृष्टः शोकाकृष्टः स वैश्यः प्राह—सौम्य, सम्यगुपलक्षितं भवता, तदहं सर्वमपिवृत्तं त्वच्छ्रुतं कृत्वा क्षीणशोको भवामि। यतः—

प्रेमपूर्वं पृच्छकाय जनाय व्यसनं निजम्।
निवेद्य लोको निःशोको भवती त्यनुशुश्रुमः ॥११॥

सौम्य, समाधिनामधेयोऽहं वणिक् दुर्वृत्तैः पुत्रकलत्रैःसर्वमपि मे

---

इहेति। शोकदुःखादिरहिते तपोवन इत्यर्थः। मुनिसंनिधिमिति। संनिधिसमीपम्, आगतो प्यागत एवेत्यर्थः॥ किमुतसङ्गादिनेतिभाव। स्मृतितःस्मरणात्। सकलपदार्थाः समस्तवस्तूनि, अधिभुवस्तलं-पृथिव्याम्, सन्ति वर्तन्ते, भाग्यरहितो जनः तान्-पदार्थान्, नो नैव लब्धुमलं समर्थो भवति। कान्तारे-गहनवने, संचारकारणं भ्रमणहेतुः। यत्राकृति स्तत्रगुणा इतिन्यायेनाह-आकृत्यापीति मुग्धः सुन्दरः। 'मुग्धः सुन्दरमूढयो' रित्यमरः। शोकदग्धो मूढवत् शोकदग्धो लक्ष्यस इत्यर्थः। उपलक्षितं ज्ञातं, पृच्छकाय पृच्छते कर्तरि ण्वुल्। निवेद्य कथयित्वा निःशोको

द्रव्यजातमात्मसात्कृत्य गृहान्निष्कासितः । ततोऽहं परं विषादमापद्य वनमिदमासाद्य तिष्ठामि । संप्रति ते कथमिव वर्तन्ते इति न जानानः चिन्तासन्तानतप्यमानस्ततोपि द्विगुणतरमस्मि निर्वेदमापन्नः । राजा-प्राह—वयस्य, वैश्यप्रवर, विचारमूढस्त्वं मे प्रतिभासि । यतो विगुणानामपि तेषां सगुणानामिव प्रेमामृतसरसि निमज्य रज्यसि ।

वैश्यः—न जाने कथमेतत् !

राजा (स्वगतम्) अहह दुःसहः खलु स्नेहो नामारिः, यद्वशादेष पश्यन्नपि न पश्यति जानानोऽपि न जानाति । भवतु किंचिदुपदिश्य मोहमस्य क्षणमपनयामि !

राजा—(प्रकाशम्) वयस्य !

पुत्रमित्रकलत्रादीन्स्वार्थमात्रस्य साधकान् ।
विज्ञाय ज्ञानमासाद्य परमं सुख माप्नुहि ॥१२॥

किंच—

धनं भूमौ पशुर्गोष्ठे प्रिया भार्या गृहाङ्गणे ।
श्मशानान्तं सुतादिश्च दत्तं जप्तं समं व्रजेत् ॥१३॥

---

शोकरहितः, वणिग् वैश्यः । दुर्वृत्तैर्दुष्टैः । आत्मसात्स्वाधीनं "देये त्रा च' इति सातिप्रत्ययः । विषादं—दुःख मापद्य प्राप्य निर्वेदं दुःख मापन्नः प्राप्तो स्मि आपदेः क्त प्रत्ययः ।

विचारमूढः विवेकशून्यः प्रतिभासि दृश्यसे, विगुणानां प्रतिकूलानां सगुणानामनुकूलानामिव, तेषां पुत्रकलत्रादीनाम्, प्रेमेति । प्रेमैवामृतं तत्र निमज्य स्नात्वा, रज्यसि-प्रसन्नोसीत्यर्थः । स्वगतं मनसिविचार्य । अपनयामि-दूरीकरोमि । आप्नुहि लभस्व, आप्नोतेर्लोट् सेर्हिः । दत्तं-दानं, जप्तं गृहीतं-हरिनाम समं-सार्धं व्रजेत् गमिष्यति ।

अथच—

मातापितृशतंचैव पुत्रमित्रसहस्रकम् ।
कालेकाले व्यतिक्रान्तं कस्य ते त्वं च कस्य वै ।।१४।।

वैश्यः—सौम्य, सम्यगुपदिष्टं भवता, परमेष तवोपदेशः मम मनो लेशतोपि नो स्पृशति । राजा—कथमिव ? वैश्यः—न जाने ।

पारिपार्श्वकः—किमाह राजा ?

सूत्रधारः—ततो राजा (स्वगतम्) इदमप्यत्र कारणं भवेत् यदहमपि वस्तुतः पुत्रपौत्रकलत्रराज्यादिस्नेहानुबन्धी तादृश एव, तथा सति ममोपदेशः—"परोपदेशे पांडित्यमि" तिन्यायेन कथमन्यं प्रबोधयेत् । अथवा घुणाक्षरन्यायाभिप्रायादेष मेस्तु ।

वैश्यः—भद्र, अस्तं जिगमिषु रिदानीं भगवान् भास्वान् ।

राजा—(मार्तण्डमण्डलं वीक्ष्य प्रणमति ।) सखे–अयं भगवान्सप्तसप्ति रुदयास्तमये समये रक्तः सन् किमपि निदर्शयति—यत्संपदि विपदि प्रसादो विषादो वा न भवति महात्मनाम् । एष एव च सन्ध्ययो र्द्वयोरभिष्टुतः शोकविमोकः सर्वलोकस्य भवति ।

तत्त्वमप्येनं प्रणाम । वैश्यः (प्रणम्योवाच) भद्र ! कोयमग्रे महोत्सव इव लक्ष्यते । राजा (निपुणं निरूप्य) सौम्य, सर्वे वनवासिन इमे संन्यासिन इतरे च प्रेमघना जनाः पुण्यमये संध्यासमये महामुनिं प्रति प्रणतिपुष्पांजलीन् कुर्वन्ति । तदागच्छावामपि प्रणम्य तदुपदेशवचनामृतं पास्यावः ।

वैश्यः—भद्र, अमृतं पास्याव इति कथं समीचीनं ते वचनम् ।

---

कालेकाले-समयेसमये, व्यतिक्रान्तं-व्यतीतम्, कस्य ते मातृपितृपुत्रमित्रादयः । अभवन्, त्वं च भवान् कस्य किमसि न किमपीत्यर्थः ।

स्नेहानुबंधी स्नेहवान् अथवेति समाधानम् । घुणाक्षरेति । घुणः कीटविशेषः । "घुणः स्यात्काष्ठवेधक" इतिरत्नकोषः । स यथा कदाचिदसाध्यमपि साधयति तद्वत्

यतः—पातालं स्त्रीमुखं नाकः सागरश्च सुधाकरः ।
एतान्यमृतधामानि प्रवदन्ति मनीषिणः ॥१५॥

पारिपार्श्वकः—भाव, ततः किमुत्तरयामास प्रजाधीशः ?

सूत्रधारः—राजा प्राह । वयस्य, अविचारिताभिधानमेतत् ।

यतः—गरः पत्युर्मृतिः स्वल्पस्थितिः क्षारं क्षयो यतः ।
ततस्तेषु च मन्तव्यममृतं न कथंचन ॥१६॥

अतः—महात्मनां सज्जनानां वाण्यामेवामृतं मतम् ।
यत् पीत्वा जन्ममृत्यू ना हित्वा मोक्षं भजत्यतः ॥१७॥

मोक्षं प्राप्नोत्यमृतो भवति ।

पारिपार्श्वकः—भाव, साधु समाहितं राज्ञा ।

सूत्रधारः—अथकिम् ।

पारिपार्श्वकः—ततस्ततः ।

सूत्रधार—ततः संध्यादिसकलकृत्यमभिकृत्य स्थूलसूक्ष्माव्यवहितविप्रकृष्ट-ज्ञानवां स्तत्रभवान्महर्षिर्यावत्तिष्ठति तावत्तौ द्वावपि सहितौ समुपेत्य प्रणेमतुः । राजा कंचित्कालं स्थित्वा सप्रश्रयमूचे । भगवन् ! विदितवेदितव्य, कर्तव्यशिक्षक, किंचिदस्ति

---

समीचीनं युक्तं, पाताल मधोलोकः । 'अधोलोकस्तु पाताल' मित्यजयः । स्त्रीमुखं-स्त्रीवदनं, 'मुखन्तु वदने मुख्ये' इतिभागुरिः । नाकः स्वर्गः सागरः समुद्रः सुधाकर श्चन्द्रः अमृतधामानि—अमृतस्थानानि, 'धाम स्थानप्रभावयो' रितिहेमचन्द्रः । प्रजाधीशो राजा, गरो विषं क्षयो नाशः तेषु-पातालादिषु, कथंचन-कदापि, महात्मनां-योगिजनानां, सज्जनानाम्-विदुषाम्, द्वौ राजवैश्यौ ।

कालं समयं, 'कालोमृत्यौ च समये' इतिमेदिनी । सप्रश्रयं सविनयं, ऊचे जगाद, ब्रुञोलिट् ।

मे प्रष्टव्यं यदि श्रीमतामस्ति नियोगोपयोगः। मुनिराह—

राजन् ! विश्रब्ध मापृच्छस्व यदस्ति ते प्रष्टव्यम्।

राजा—महाराज, आहारो निद्राभयं रतिरेतत्समग्रमेव।

यदा नरेष्वथ पक्षिषु तदा भिदा खलु केव ? ॥१८॥

मुनिः—राजन्, साधु पृष्टोस्मि, श्रूयताम्।

एकस्तत्र हि विद्यते ज्ञानाज्ञानविशेषः।

अन्यत्कर्तव्ये तयोर्भेदस्यापि न लेशः ॥१९॥

राजा—तत्कथं मे राज्यं प्राज्यं मोह मज्ञस्येव विज्ञस्यापि जनयति। किंच अयं हि वृद्धवैश्यः तिरस्कृतः पुत्रभृत्यप्रभृतिभिर्नितान्तमुज्झितोपि न तानुज्झति मनसा। तत्कथमावयोर्ज्ञानवतोरप्यज्ञानवतोरिवैषा दोषाविष्कृतिः ?

मुनिः—(सश्लाघम्) राजन् ज्ञानवानसि। प्रसन्नोस्मि ते मतेर्विभवोपरि। यया इमे समेपि ज्ञानवन्तो नरदेहवन्तोऽस्मिन्ममतावर्ते मोहगर्ते निपतन्ति सा एका शक्तिर्भगवती। तत्प्रभावेणैव सर्वमपि जगदिदं मुह्यति ज्ञानिनामपि मनांसि मोहे सकलदुःखसन्दोहे पतन्ति। का कथा पुनर्वृथाभिमानिनामिति। तस्या एव च श्रुतयोनिःश्वसितं पंचभूतानि वीक्षितं चराचरं स्मितं महाप्रलयः सुप्तमिति।

राजा—किंनाम तस्याः ? मुनिः—(सप्रणयकोपमाह)—

---

नियोगोपयोगः-आज्ञावसरः, विश्रब्धं निःशङ्कम्, आपृच्छस्वेति। 'आङिनुप्रच्छयो' रित्यात्मनेपदम्। भिदेति। आपं चैव हलन्तानामित्याप्। भेदस्य लेशोलवोपि नेत्यर्थः। अपिर्भिन्नक्रमः। 'लवलेश कणाणव' इत्यमरः। प्राज्यं प्रचुरं, प्रभूतं प्रचुरं प्राज्यमित्यमरः। नितान्तं सर्वथा, उज्झितोपि त्यक्तोपीत्यर्थः।

सश्लाघं-सप्रशंसं समेपि-सर्वेपि, नरदेहवन्त इति प्राणिमात्रस्योपलक्षणम्। ममतेति। अयं ममाहमस्येति ममत्वरूपे मोहान्धकूपे, मुह्यति-मोहं गच्छति।

माया न सा सकलकायात्मिका किमनपाया श्रुता भगवती
पुण्या परं सकलगुण्याभिमानततिशून्या त्वयात्रभवती।
कर्त्री पुरा तदनु भर्त्री ततो नु खलु हर्त्री समस्तजगतो
दक्षा स्वभक्तजन-रक्षाविधौ विबुधपक्षावलम्बनकरी ॥२०॥

अपिच—या भीकरी शुभकरी परमा च माया ।
तां ज्ञातुमिच्छसि यदि त्वमनंतशक्त्याः ।
भक्त्या स्वभक्तदुरितौघविखण्डिकायाः ।
पादारविन्दयुगलं स्मर चण्डिकायाः ॥२१॥

किमनल्पजल्पनेन—

देवीस्तोतुर्जगद् वश्यं सर्वे नश्यन्त्युपद्रवाः ।
मानं धनं च सत्पुत्रं कलत्रं भवति ध्रुवम् ॥२२॥

अपिच—ऋणरोगादिदारिद्रयं पापश्च अपमृत्यवः ।
दूरादेव पलायन्ते नीहारा भास्करादिव ॥२३॥

किंच—राजन् सर्वमहं जानामि त्वद्विषये यादृशोऽसि। शोकं माकार्षीः । इदमकस्मात्पतितं दैवतन्त्रं दुःखयन्त्रं त्वमनुभूय भूयोपि लब्धसर्वस्व श्चिरकालं सुखचक्रवालं भुक्त्वाग्रे सावर्णिको नाम मनुर्नुतमित्रो विवस्वत्पुत्रो भविष्यसि । अथ चायं ते वयस्यो वैश्योपि प्रवरं

---

सकल कायात्मिका-जगत्कारणत्वात् । अनपाया-नित्या सकल गुण्या त्रिगुणा सात्रभवती भगवती माया दुर्गायाःशक्तिः दक्षानिपुणा, विबुधा ज्ञानिनो देवाश्च । या महामाया दुष्टानां भीकरी शुभकरी च भक्तानाम् । तां ज्ञातुमिच्छसि यदि तदेत्यर्थः ।

उपद्रवा-विघ्नाः मानं यशः । नीहारा-हिमानि, भूयोपि पुनरपि, सुखचक्रवालं-सुखसमूहं, अग्रे जन्मान्तरे विवस्वत्पुत्रः सूर्यसूनुः, वयस्यः सखा, 'वयस्यः सवयाः सखे' त्यमरः ।

देवीवरं लब्ध्वा बहुप्रयाससंचिते वित्ते तड़ित्प्रख्ये सौख्येच विरक्तो-भूत्वा परमज्ञानवान्भविष्यति ।

पारिपार्श्वकः—भाव, कथमेतत्समस्तं वृत्तं मुनिना तेनावोचि ।

सूत्रधारः—(स्मित्वा) अरे, कोऽत्रसन्देहः त्रिकालज्ञत्वान्मुनीनाम् ।

राजा—सप्रणायमंजलिं बध्वा मुनिमवदत्, भगवन्, याभवतैका चण्डिकाऽराधनायोपदिष्टा सा किं किं नाम विशिष्टा कथमुत्पन्ना प्रसन्ना च भवति केन केन नाम्ना स्तुता सती कानि कानि चाद्भुतानि चरितानि भक्तानां कृते कृतवतीति मे बलवती जिज्ञासा ।

मुनिराह-राजन् कार्यकारित्वेन देवतानां नामानि भवन्ति । मुख्यानि तु महाकाली-महालक्ष्मी-महासरस्वती-त्यादीनि तस्या नामानि ।

शृणु—

संसारसागरलसद् घनपापपङ्क-
प्रक्षालनैकनिपुणां सुरदीर्घिकावत् ।
ब्रह्मेश्वरप्रभृतिदेवनिषेवणीयां
तां यान्ति ये शरणमाशु शमाप्नुवन्ति ॥२४॥

किंच—

यत्पादपद्ममकरन्दरसं हि पीत्वा ।
हित्वा समस्तविषयान् विषवद्रसज्ञैः ॥
स्वानंदनीरनिधिवीचिनिमग्नचित्तैः ।
संमन्यते जगदशेषमिदं तृणाभम् ॥२५॥

---

तड़ित्प्रख्ये-विद्युत्समाने, "तड़ित्सौदामिनीविद्यु' दित्यमरः । बलवत्युत्कटा, जिज्ञासा-ज्ञातुमिच्छा, तस्याः-चण्डिकायाः । संसारेति । संसार एवसागर स्तत्र लसन् यो घनो निविड़ः पापमेव पङ्कः कर्दमस्तस्य प्रक्षालने दूरीकरणे निपुणामतिचतु-राम् । किंवत्-सुरदीर्घिकावद् गङ्गावत् । ईश्वरः शिवः । आशु-शीघ्रं, शं सुखमाप्नु-वन्ति लभन्ते । यत्पादेति । यस्याः पाद एव पद्मं तस्य मकरन्दरसं मधु, स्वानन्द एव नीरनिधिर्जलधिस्तद्वीचयस्तरङ्गास्तत्र निमग्नचित्तैः ।

अपिच—

अपारसंसारसमुद्रमध्ये निमज्जतां या शरणंगतानाम् ।
विनाश्य दुखान्यखिलानि कामं दत्ते निकामं भुवि भावुकानाम् ।२६।।

अन्यच्च—

यत्पूजनीयकमनीयपदारविन्द-
प्रस्यन्दमानमकरन्द-जुषां नराणाम् ।
किंकार्यमार्यकरणीयमसाध्यमास्ते
नो साध्यते खलु यदत्र परत्र लोके ।।२७।।

सा भगवती—देवकार्यसिद्धेः कृते आविर्भवति यदा ।
नित्या सत्यपि कथ्यते उत्पन्नेति तदा ।।२८।।

राजा—कथमिव ?

मुनिः—राजन्, सर्वमादितः प्रभृति कथयामि ते कृते । इत्युक्त्वा समग्रं देवीचरितमव्यग्रं श्रावयामास ।

पारिपार्श्वकः—भाव, ज्ञातमस्यनाटकस्य मूलं त्वमिदानीं स्वमनीषितं कुरुष्व ।

सूत्रधारः—मारिष, त्वमद्य सद्यः सर्वं संस्कृतभाषिपात्रवृन्दममन्दचेष्टं कुरुष्वावधानदानेन ।

---

तृणाभं तृणवत् । अपारेति । अपारोदुस्तरो यः संसार एव सागरः समुद्रस्तन्मध्ये निमज्जतां पतितानां पश्चाच्च शरणं गतानां भावुकानां पुंसामखिलानि दुःखानि विनाश्य या देवी भुव्यपि निकामं यथेच्छं काममीप्सितं दत्ते प्रपूरयति । यत्पूजनीयेति । यद्यस्याः आर्यैः श्रेष्ठैः करणीयमाचरणीयं, अत्रपरत्रलोके तत् किं असाध्यमस्ते यत् नो साध्यते क्रियते किमपि नेत्यर्थः देवकार्यसिद्धेः कृते देव-कार्यसंपादनाय, आविर्भवति शरीरं गृह्णाति ।

पारिपार्श्वकः—यथाज्ञापयति भावः। (इति निष्क्रान्तः।)

सूत्रधारः—अहमिदानीं मान्यमहोदयान्सहृदयान्प्रति किमपि विज्ञापयामि। (प्रणिपत्य)

शृणुत शृणुत विज्ञा दोषमात्रानभिज्ञाः
यदिह किमपि कर्तुं यत्यते ऽस्माभिरद्य।
प्रगुणनिपुणतायाः पात्रवर्गस्य कार्या-
दथ रसलसतो वा नाटकस्य प्रभावात् ॥२६॥

(नेपथ्ये) अहो अब्रह्मण्यम्-अब्रह्मण्यम्।

सूत्रधारः—(कर्णं दत्त्वा) अये कथमिव मत्कथनानन्तरमेव कस्यापि विगतक्षणः कुलक्षणः शब्दः श्रुतिपथमवतरति। (विमृश्य) भवतु। ज्ञातम्। ताभ्या मसुराभ्यामाकुलीकृतस्य ब्रह्मणो भवेत्। तदिदानीमत्र स्थातु मनुचितं यत एकोपि दानवो दृष्टिपतितो महतीं भीतिं जनयति किं पुनर्द्वावितिनिष्क्रान्तः। इति प्रस्तावना।

(ततः प्रविशति संभ्रान्तो ब्रह्मा)

ब्रह्मा—ननु भोः असुरौ, कथंकारमकारणमेव युवां धर्मात्मानं मां मारयितु मिच्छथः।

---

शृणुत शृणुतेति। चापले द्विरुक्तिः। "संभ्रमेण प्रवृत्तिश्चापल" मितिकाशिका। विज्ञाः, विशिष्टज्ञानवन्तः, यत्यते प्रयत्यते, पात्रवर्गस्य-पात्रसमूहस्य, प्रगुणेति। प्रकृष्टाभिज्ञतायाः रसलसतःरसेन वीरादिना, लसतो भासमानस्येत्यर्थः। नेपथ्यइति। नेपथ्यंजवनिका, नेपथ्यं स्याज् जवनिका रङ्गभूमिःप्रसाधन मित्यजयः। विगतक्षणः हर्षरहितः। असुराभ्यां=मधुकैटभाभ्याम्, आकुलीकृतस्य=परिपीड़ितस्य, स्थातुं-स्थितिरित्यर्थः। अनुचितम्-अयोग्या, दृष्टिपतितःदृष्टःसन्।
संभ्रान्तइति। शंकितस्त्रस्तश्चेत्यर्थः शंकात्रासौ च संभ्रमइतिदशरूपकम्। नन्वाक्षेपे नन्वाक्षेपे परिप्रश्ने इति हेमचन्द्रः। मारयितुं हन्तुं 'व्यापादनंच हननं मारणं चेतिभागुरिः।

असुरौ—अरे, प्रकृत्यैव नो धर्मात्मानो द्वेष्याः प्रियाश्च पापात्मानः ।

ब्रह्मा—(स्वगतम्)

विष्णुः श्रीमानद्य वै जलमग्ने भुवने ।
कल्पान्ते निद्रात्यहौ वारां नैधवने ॥३०॥

इमौ च विष्णुकर्णमलजौ दुष्टदनुजौ मां हन्तु मुद्यतौ ।

तत् किमिदानीं कर्तव्यम् । ( निर्ध्याय ) आं ज्ञातम् ।

यो मायया त्रिगुणयापि जगत्समग्रं
संयच्छते सृजति पाति च सज्जते न ।
यो विश्वकारणमनादिरनन्तशक्ति
र्भक्त्या तदीयचरणं शरणं करोमि ॥३१॥

अपिच—

रुद्रोपि यस्य किल शक्त्यवबोधकस्य
नो वेद तत्त्वमथ कृत्स्नतयापि वेदः ।
तं भावये स्वहृदये शरणागताना-
माशु प्रणश्यति यतः सकलोपि खेदः ॥३२॥

---

प्रकृत्यैव स्वभावेनैव, नोऽस्माकं, प्रिया वल्लभाः, 'प्रियं हृद्यं मनोहारि दयितं वल्लभं त्रिषु' इतिगोपालः । अहौ शेषे, अहिर्वृत्रासुरे शेषे इतिरत्नमाला । वारां नैधवने समुद्रजले, वनं नीरेऽम्बुनिवली वमितिमेदिनी । त्रिगुणया-सत्वरजस्तमोलक्षणया, लोहितशुक्लकृष्णा मितिश्रुतेः । सज्जते नेति । आसक्तो न भवतीत्यर्थः । सज्जतेरात्मनेपदं 'यदभिप्रायेषुसज्जते' इतिभाष्यकारोक्तेः । विश्वकारणमिति । 'यत इमानिभूतानी तिश्रुतेः ।

रुद्रोऽपीति । रुद्रः शिवः यस्य विष्णोः, कृत्स्नतया-साकल्येन । न वेद= न जानाति । अथच वेदोपि साकल्येन न जानातीत्यर्थः । नेतिनेतिचेतिश्रुतेः । का कथा न्येषामिति भावः । तं विष्णुं, भावये=स्मरामि ।

(सप्रणयमंजलिं वध्वा)

विष्णो, सर्वस्य त्वमेव जगतोऽसि स्वामी ।
क्षमा सिन्धुरनुपमदयावानन्तर्यामी ॥३३॥
स्थावरजङ्गमरूपिणी मया कृता सृष्टिः ।
सर्वत्रापि यथायथं भवति भवद्दृष्टिः ॥३४॥
जीवनमथ मरणं सुखं दुःखं तव हस्ते ।
भगवन्निति हेतोः सदृक् वद पुरुषः कस्ते ॥३५॥

किंच—यशोऽपयशोपि ते दृष्टिकुदृष्टिफलम् ।
इच्छसि यत्कुरुषे तदेव चलति हि कस्य बलम् ॥३६॥
तव शरणं समुपागतो यदि ना कश्चन तापी ।
तर्हि सवितु रप्यग्रतो भवेत्तमः संस्थापि ॥३७॥
सिन्धुस्थाने विन्दुमपि कर्तुं त्वं शक्तः ।
भवति मेरु रपि सर्षपः कृपया तव रिक्तः ॥३८॥
दशशतवक्त्रैः सर्पराड् गायन् कीर्तिन्ते ।
स्थगितो भवति तथापि तत्पारं नो लभते ॥३९॥
अतएवास्मि चतुर्मुखैरीश्वर जगदीश ।
तावकगुणगानं कथं हरे कर्तुमीशः ॥४०॥
त्वं सर्वैरपि सर्वदा भक्त्या स्मरणीयः ।
दुःखौघस्तेषां सदा त्वयापहरणीयः ॥४१॥

---

ना पुमान्, तापी दुःखी, सवितुः सूर्यस्यापि अग्रतः पुरः, तमोंऽधकारस्य, संस्थापि स्थितिरपि, भवेदेवमित्याशयः। सिन्धुस्थाने-सिन्धुः समुद्रः 'देशे नदविशेषेऽब्धौ सिन्धुर्नासरिति स्त्रिया मित्यमरः। शक्तः समर्थः, मेरुः सुमेरुपर्वतः रिक्तो रहितः। दशदशवक्त्रैः सहस्रमुखै, सर्पराट्-शेषोपि तत्पारं=कीर्तिपारम्।

असुरौ—यावदयं किमपि ध्यायति तावदन्यत्र कुत्रचिद् गच्छावः इति निष्क्रान्तौ ।

( आकाशे )

ब्रह्मन् ! भगवत्या योगनिद्रायाः स्तवस्त्वयाद्य कर्तव्यः ।
सैव प्रसन्ना सती तेऽभीष्टसाधयित्री भवित्री ।

ब्रह्मा—आः सुस्ठु स्मारितमाकाशवाण्या । तदिदानीमहं विष्णुं प्रबोधयितुं स्थितिसंहारकर्त्रीं जगद्धात्रीं भगवतीं योगनिद्रा मेकतानेन ध्यानेन स्तौमि । (प्रणिपत्य) भगवति योगनिद्रे !

सावित्री परमा रमास्यथ सुधा मेधा स्वमेव स्मृतिः
त्वं देवी प्रकृतिः समस्तजगत स्त्वं श्रीस्तथा ह्रीरपि ।
शान्तिः क्षान्ति रथ।तिसुन्दरतरा पुष्टि श्च तुष्टिः परा
घोरा त्वं सकलास्त्रिणी त्वमथवाशक्तिः परा किं स्तुम ः॥४२॥

इमौ हन्तुं यमनिभौ दानवौ मधुकैटभौ ।
प्रबोधय द्रुतं विष्णुं जिष्णुं मामद्य रक्षितुम् ॥४३॥

( नेपथ्ये )

ब्रह्मन्, विष्णुशक्तिर्योगमायाहं तुष्टास्मि ते स्तुतेः । एष विष्णु-र्भक्तव्यसनमसहिष्णु रतिशीघ्र मुत्थाप्यते ।

---

अयं=ब्रह्मा, किमपि, ध्यायति=कर्मापि आह्वयतीत्यर्थः । स्तवः—स्तवः स्तोत्रं स्तुतिर्नुतिरित्यमरः । भवित्रीभविष्यतीत्यर्थः । स्थितिः पालनं, एकतानेन विषयान्तराप्रसक्तेन ध्यानेन-मनसा, सावित्री-सर्वमनोरथ-साधयित्री, परमोत्कृष्टा, रमालक्ष्मीः सुधा-अमृतरूपा, प्रकृतिः प्रधानकारणम् ह्रीर्लज्जारूपा । यमनिभौ-यमसदृशौ, जिष्णुं जयनशीलं, विष्णुं द्रुतमाशु, प्रबोधयोत्थापय । तुष्टास्मि प्रसन्नास्मि, ते तव स्तुतेः स्तुतिकरणात्, एष समीपतरवर्ती, समीपतरवर्ति चैतदोरूप, मित्यनुशासनात् ।

( ततः सहसोत्तिष्ठति विष्णुः । )

ब्रह्मा—( विष्णुं दृष्ट्वोत्थायच ) देव, त्रिभुवननाथ, परित्रायतां परित्रायताम् ।

विष्णुः—( सोत्प्रासप्रणयम् ) ब्रह्मन्नलंवैक्लव्येन शीघ्रमुच्यतां कुतोभवान् परित्रातव्यः ।

ब्रह्मा—(सत्रासं कम्पमभिनीय) असुराभ्याम् ।

विष्णुः—कुत इहासुरसंभावना ।

ब्रह्मा—भवतः कर्णयोर्मलतः ।

विष्णुः—क्व पुनस्तौ ।

ब्रह्मा—इदानी मत्रैवास्तां न जाने कुत्र गतौ, भवतु । एवं कथयामि-

रे दानवौ कथयतां क्व गतौ भवन्तौ
एकाकिनो मम वधे विहित-प्रयत्नौ ।
चेद्रक्षथः कमपि वीर-पदाभिमान-
मागत्य विष्णु-दहने भवतं पतंगौ ॥४४॥

असुरौ—(प्रविश्य) अये, को नु खल्वावामाह्वयति । (पुरोऽवलोक्य) (परस्परम्) अन्योपि कश्चन शङ्खचक्रगदापद्मधरः स्मरसुन्दरः पुमानेतस्यावयोर्वध्यस्य समीपे तिष्ठति । भवतु । पृच्छावः ।

मधुः—(समीपमुपसृत्य) अरे को भवान् ?

विष्णुः—(सस्मितम्) आः, सगर्व्वौ मधुकैटभौ किं ? मामपि न जानीथः ।

---

परित्रायता मिति संभ्रमे द्विरुक्तिः । कुतः कस्मात्, परित्रातव्यः रक्षणीयः इदानी मधुना । एकाकिनो ऽसहायस्य, मम ब्रह्मणः, वधे=मारणे, चेत् यदि कमपि वीरत्वाभिमानं रक्षथः । तदागत्य विष्णुरेवदहनोऽग्निः मयूर व्यंसकादिसमासोरूपकंच ।

मधुः—रकारः क गतः ?

विष्णुः—तव मुखे । अस्तु, शृणुतम् ।

असुराणामहं हन्ता सुरत्राता स्म्यथो हरिः ।
युवां हत्त्वा भविष्यामि कैटभारिश्च मध्वरिः ॥४५॥

कैटभः—(उपसृत्य) मधो, किमथं प्रलपति ।

मधुः—(सोपहासम्) युवयो र्निग्राहक इति ।

कैटभः—(सक्रोधम्)

रे रे मिथ्याप्रगल्भ त्वं सज्जो भव यमालये ।
त्वामेव प्रथमं हत्वा पश्चादेनं विलोकये ॥४६॥

विष्णुः—(विहस्य) रे दानवापसदौ,

नन्वहं सर्वदा सज्जः सज्जनानभिरक्षितुम् ।
सज्जमेतद्धि मे चक्रं वक्रं दुर्जनता कृते ॥४७॥

मधुः—अहोधृष्टताऽस्य मनुष्यकीटस्य यद् द्वाभ्यामपि न विभेति । (सकोपाटोपम्)। अरे रे विकत्थनाप्रगल्भ, अति हि नाम प्रगल्भसे तदलमलीकवचःसंग्रामेण कुर्वः संग्रामप्रारम्भं विलोकिष्यते यादृशो भवान् ।

विष्णुः—आः पापौ केयं वाग्विभीषिका, शीघ्रं क्रियतां युद्धारम्भः । (इतितदेव कर्मारभन्ते ।)

विष्णुः—आश्चर्यमाश्चर्यम्, क गतं ममातुलं बलम् । पञ्चसहस्रवर्षैरपि युध्यता मयका नैतौ पराजितौ। आज्ञातम् । महामायावरेणैतावजेयौ । तदद्यतामेवादिशक्तिं मायां स्तौमि ।

---

तत्र पतंगौ पक्षिविशेषौ, पतङ्गौ पक्षिसूर्यौ चेत्यमरः । भवतं जायेथाम्, असुराणां दानवानां हन्ता मारकः । प्रलपति अनर्थकं ब्रवीति, प्रलापोऽनर्थकं वच इत्यमरः । निग्राहको मारकः । रे रे इति हीनामन्त्रणम् एनं ब्रह्माणं विलोकये विलोकयिष्ये, वर्तमानसामीप्ये लट् ।

महामाये शम्भुजाये खिन्नोऽहं युद्धकर्मणा।
साहाय्यं कुरु मेदेवि येनेमौ नाशयेऽधुना ॥४८॥
इत्युक्ता सा भगवती एवमुक्तवती हरिम्।
युद्धं कुरुष्वाद्य विष्णो सद्य एतौ विमोहये ॥४६॥

मधुः—कैटभ, महाबलिष्ठोऽयं यत्पञ्चसहस्रसमा-परिमाणमयेन समयेन द्वाभ्यामपि सह युध्यमानस्तथैव साभिमानः परिदृश्यते। तन्नून-मावां हनिष्यति। किमत्र प्रतिविधेयम्।

कैटभः—यथा ते रोचते।

मधुः—भवतु। एवं कथयामि। हरे, अविराम-संग्राम-करणे प्रकाण्ड-पण्डितोऽसि। अतश्च—

आवामतिसंहृष्टौ तव बलदृष्टौ रणक्ष्मामध्ये।
वरमावयोः सकाशाद् वृणुताद्यो रोचते भवते ॥५०॥

विष्णुः—(विमृश्य) दानवौ,

दाताहं न ग्रहीतास्मि, भवन्तौ वृणुतं वरम्।
यद्याग्रहो, युवामद्य यातं मे वध्यतामिह ॥५१॥
किमपरेणावरेण।

असुरौ—(श्रुत्वा सखेदमन्योन्यमवलोकयतः)

हन्त वंचिता वावा मनेन वंचनापटुना।

---

दुर्जनताकृते दुर्जनानां समूहो दुर्जनता "ग्रामजनबन्धुभ्यभ्यस्तल्।" वक्रं कुटिलम् चक्रं सुदर्शनम् विकत्थनाप्रगल्भ आत्मश्लाघिन्, विकत्थना स्तवः श्लाघा इतिहलायुधः। प्रगल्भसे प्रलपसि, अलीकं मिथ्या, तदेव युद्धात्मकमेव। युध्यमानः युद्धं कुर्वाणः, रणक्ष्मामध्ये रणभूमौ, क्षितिःक्षान्त्योःक्ष्मेत्यमरः। अपरेण अन्येन वरेण किम्, नकिमपि प्रयोजनमित्यर्थः। अन्योन्यंपरस्परं, अवलोकयतः पश्यतः।

(सर्वां पृथ्वीं जलप्लुतां दृष्ट्वा)

अथवैवं कथयावः । हरे यत्र जलविधुरा वसुन्धरा वर्तते तत्रावां जहि ।

विष्णुः—(तथास्तु उक्त्वा क्षणं ध्यात्वा च) स्वजघनस्थलं विपुलं करोति ।

( अन्तरिक्षे पुष्पवृष्टयनन्तरम् )

( नेपथ्ये )

भगवन्, मधुकैटभारे !

तवेदं परमाख्यानं यः श्रोष्यति समाहितः ।
भवेत्तस्याधिराहित्यं साहित्यं च विधेर्यथा ॥५२॥

विष्णुः—परमनुगृहीतोस्मि ।

(ततः प्रविशति ब्रह्मा)

ब्रह्मा—न जाने कथमद्य विष्णुः ।

( नेपथ्ये )

ब्रह्मन्, मास्म चिन्ता सन्तानै रात्मानं दुःखीकुरु ।
दानवौ तौ विष्णोः चक्रानले पतङ्गत्वमाप्तौ ।

ब्रह्मा—(हर्षं नाटयति)

विष्णुः—बहुसमयो मे व्यतीतो लक्ष्मीं परित्यक्तवतो ब्रह्माणं च,

---

अनेन पुरुषेण, जलविधुरा जलरहिता वसुन्धरा पृथ्वी, आवां मधुकैटभौ, जहि मारय, हन्तेर्लोट् सेर्हिः ध्यात्वा विमृश्य विपुलं विस्तृतं, अन्तरिक्षे गगने, नभोन्तरिक्षं गगनमित्यमरः । इदं मधुकैटभनाशरूपम् । परमाख्यानं चरित्रं यः समाहितो दत्तचित्तः श्रोष्यति पठिष्यति तस्याधि र्मानसी व्यथा तद् राहित्यं साहित्यं सङ्गमश्च विधे र्ब्रह्मण इव भवेत् । तौ=मधुकैटभौ ।

तदिदानीं शीघ्रमुपगम्याश्वासयितव्यौ तौ। (परिक्रम्यावलोक्य च) अये, एष ब्रह्मा इत एवागच्छति।

ब्रह्मा—(समीपमुपसृत्य) भगवन्, सुरासुरजिष्णो, विष्णो, नमस्करोमि।

विष्णुः—एह्येहि सुरज्येष्ठ, इति सहर्षमालिङ्गति।

ब्रह्मा—

भगवन्, ज्ञातुमिच्छामि यमाभौ मधुकैटभौ।
कया रीत्या दुरात्मानौ हतौ मत्परिपन्थिनौ ॥५३॥

विष्णुः—ब्रह्मन्नेहि, प्रियतमा-रमा-समक्ष मेतेन वृत्तेन मनो विनोदयावः। इति निष्क्रान्तौ।

इति प्रथमोऽङ्कः।

---

चक्रानले चक्ररूपाग्नौ पतङ्गत्वमाप्तौ भस्मीभूतावित्यर्थः। तत् तस्माद्धेतोः यत्तद्यतस्ततो हेतावित्यमरः। इदानीं शीघ्र मुपगम्य गत्वा तौ लक्ष्मीब्रह्माणौ, सुरज्येष्ठ! ब्रह्मात्मभूः सुरज्येष्ठ इत्यमरः। यमाभौ यमसदृशौ, मत्परिपन्थिनौ शत्रू, प्रथमोऽङ्क इति॥ अङ्कलक्षणंभरते—प्रस्तुतार्थोपसंहारो यत्राङ्कः सोभिधीयते॥

* इति दुर्गाभ्युदयनाटकसंकेते प्रथमाङ्कविवरणम् *

## * अथद्वितीयोऽङ्कः *

(ततः प्रविशति विषण्णवदनः कश्चिद् द्युसदनः ।)

हन्त, दुष्टेन महिषासुरहतकेन सर्वमपि देवसैन्यं पराजित्य परा-काष्ठां विषादस्यारोपितो भगवानिन्द्रः । (साञ्जलिबन्धम्) अयि, करुणावरुणालया ब्रह्मेशवैकुण्ठनिलयाः, अतो दुरात्मतोमहिषासुरा-त्पाहिपाह्यस्मान् त्रिदशान् । (व्यथां नाटयित्वा) अये, तस्मात्परमदा-रुणात् रणात् परं विश्रान्तोऽह मत्यङ्गभंगविकलोजात स्ततः किंचिद्विश्रमितु मत्रैव मया स्थातव्यं यावदत्र नन्दने वने मनोविनो-दाय नागच्छति भगवान्मघवा । (इतस्ततो विलोक्य) एष स्वर्गेशः कैश्चन देवैः परिवृत इत एवागच्छति । तद् गच्छामीति निष्क्रान्तः ।

इतिविष्कम्भकः ॥

(ततः प्रविशति देवैः सहेन्द्रः)

इन्द्रः—(सर्वान्प्रति) भो देवाः सम्प्रत्यस्माभिर्महिषासुरविषय-मुद्दिश्य ब्रह्मलोके गन्तव्यम् । देवाः—तथास्त्विवति निष्क्रान्ताः ।

---

विषण्णवदनः शुष्कमुखः द्युसदनो देवः । हन्तविषादे । हन्तहर्षविषादयो-रित्यमरः । अयीति-प्रेमसंबोधने, करुणावरुणालया दयासागराः, वैकुण्ठनिलयो विष्णुः अतोऽस्मात् दुरात्मतो दुरात्मनः पञ्चम्यास्तसिल् । पाहिपाहीति विषादे-द्विरुक्तिः । संभ्रमेविस्मये हर्षे विषादेप्यधिकंपदमित्युक्तेः । त्रिदशान् देवान् 'अमरानिर्जरादेवास्त्रिदशाइत्यमरः । मघवा इन्द्रः । विष्कम्भक इति ।

वृत्त वर्तिष्यमाणानां कथांशानां निदर्शकः ।
संक्षिप्तार्थस्तु विष्कम्भो मध्यपात्रप्रयोजितः ॥

ब्रह्मा—पुरोऽवलोक्य । अये, कथमिमे समेपि महेन्द्रपुरःसराःसुरा इहैवागच्छन्ति । स्मरणं कृत्वा, अथवा स एव विषयो भवेत् ।

इन्द्रः—(पुरोदृष्ट्वा) भो भो देवाः वेदसंवेदनजनितानन्दसन्दोहहर्षित-महर्षिभिः परिवृत इत स्तिष्ठति भगवान् परमेष्ठी । वीणया गायन्ती सरस्वती च । सरस्वती गायति, सर्वे शृण्वन्ति ।

सुखं च दुःखं च सर्वदैवात्र नास्ति कस्यापि भावयित्वा
दशां हि लोकस्य चक्रनेमिक्रमेण शोच्यं न लक्षयित्वा ।
बलेन कालस्य दुर्बलोपि बलिष्ठ मप्यत्र जेतुमीशः
मनुष्यमात्रस्य कैव गाथा इदन्तु सहते स्वयं सुरेशः ॥१॥

इन्द्रः—सत्यमुपवीणयति भगवती सरस्वती ।
इदानीमस्ति ब्रह्मणः पार्श्वे गन्तुमवसरः ।

( सर्वे प्रविशन्ति )

इन्द्रः—भगवन्, विदितवेदितव्य, कर्तव्यशिक्षक श्रेष्ठ, सुरज्येष्ठ, नमस्करोमि ।

ब्रह्मा—(इन्द्रं दृष्ट्वा) शचीपते स्वागतं भवते ।

---

समेपि सर्वेपि, इन्द्रपुरःसराः सुराः इन्द्रप्रभृतयोदेवाः । वेदस्य मन्त्रब्रह्मणात्मकस्य यत्संवेदनं ज्ञानं तेन जातोय आनन्दसन्दोहस्तेनसंजातहर्षा ये महर्षयस्तैः । परिवृतो युक्तः परमेष्ठी, ब्रह्मा परमेष्ठी पितामह इतिब्रह्मनामस्वमरः । कस्यात्यन्तमितिमेघदूतपद्यानुसारेणाह—सुखंचदुःखंचेति । कस्यापीति, प्राणिमात्र स्योपलक्षणम् । जेतुमीशः समर्थः सुरेशःइन्द्रः । विदितेति । विदितं ज्ञातं वेदितव्यं येन तत्संबुद्धौ विदितवेदितव्य, कर्तव्यशिक्षकेति । इदमिदानी कर्तव्य मिति शिक्षकेत्यर्थः । शचीपतइति संबोधनं शच्या एवेदानीं पतिस्त्वं न दिवस्पति-

इदमासनमत्रोपविश्यताम् ।

( सर्वे इन्द्रमनूपविशन्ति )

ब्रह्मा—इन्द्र, कथमुद्विग्नोसि ।

इन्द्रः—भगवन्, सर्वज्ञोसि, तथापि ।

दानवानां महत्कष्टमदृष्टचरमस्ति यत् ।
तदेव भवता मग्र ेव्यग्र ेण मयकोच्यते ॥२॥

ब्रह्मा—इन्द्र, व्यतीतोभवतो दुःखमयः समयः सम्प्रति न कष्टं भविष्यति । अद्य भगवान् विष्णुर्देवदेवंमहादेवं मिलितुं गतः तत्रैवास्माभिरपि गन्तव्यम् ।

यतः—

विचार्यं बहुभिर्बुध्या सुध्यातं किल कल्प्यते ।
यत्तदेव फलत्याशु कार्यं मित्यवधार्यताम् ॥३॥

इन्द्रः—तथास्त्विति निष्क्रान्ताः सर्वे ।

(ततः प्रविशतो हरिहरौ ।)

विष्णुः—देव, कैलासवासिन्, यद्विषयेमंत्रयन्तावावां वर्तावहे तत्साधुजातम् । यतोऽत्र स्वयमागतो विवुधश्रेष्ठं सुरज्येष्ठं पुरस्कृत्य सर्वदेवोपेतः पुरुहूतः ।

---

रिति ध्वनयति । इन्द्रमन्विति । अनुर्लक्षणे इतिकर्मप्रवचनीयत्वाद्द्वितीया । सर्वज्ञोसीति । तथाच न कथनापेक्षेत्यर्थः । तथापि भवदाज्ञानुरोधेनैत्यर्थः । विचार्येति । बुद्धया बुद्धिपूर्वकं वहुभिरिति सहार्थे तृतीया । सुध्यातंनिश्चितं यत्कल्प्यते क्रियते तदेवाशु फलति फलेन संपद्यते । सुरज्येष्ठं ब्रह्माणं पुरुहूत इन्द्रः ।

(सर्वे प्रविशन्ति)

**ब्रह्मा**—इन्द्र, अयमिह सुरासुरजिष्णु र्भगवान् विष्णुः परमेश्वरेण शंकरेण सह किमपि मन्त्रयन् वर्तते ।

**इन्द्रः**—भगवन्, किमेतौ मन्त्रयतः । न खलु विदितोऽयमसुरबाधा-वृत्तान्तः स्यादाभ्याम् ।

**ब्रह्मा**—(सस्मितम्) किमीश्वराणां परोक्षम् ।

(समीपमागत्य सर्वे यथायथं नमस्कृत्योपविशन्ति)

(विष्णुरिन्द्रं प्रति पृच्छति सर्वे शृण्वन्ति)

**विष्णुः**—इन्द्र, कस्कः खलु स्वर्गोपप्लवः कृतस्तेन दुष्टमहिषेन ।

**इन्द्रः**—देव, यद्यपि न किंचिदपि परोक्षं नाम भवतां तथापि यथास्ति कथयामि ।

**ब्रह्मा**—सर्वमपि तस्योद्वृत्तस्य वृत्तमभिधेयम् ।

**इन्द्रः**—भगवन्, परस्परं युद्धोन्मुखेषु वीरप्रमुखेषु महिषासुर-सैन्यं प्रति जन्यं कर्तुं समस्तं मया प्रशस्तं गतदैन्यं देवसैन्यं प्रहि-तम् । परन्तु प्रबलेन तद्बलेन सर्वास्माकं सेना दीनदीना बल-हीना कृता । अनन्तरं च कुलिशकलितपाणिरहमपि संग्रा-

---

शंकरेण शिवेन शिवस्य परमेश्वरत्वं श्रुतिसिद्धम् । तथाच तैत्तिरीये—ईशानः सर्वविद्यानामीश्वरः ॥ श्वेताश्वतरेपि—तमीश्वराणां परमं महेश्वरम् ॥ ईश्वराणां सर्वज्ञत्वादिगुणशालिनाम् । स्वर्गोपप्लवः स्वर्गस्योपद्रवः, परोक्ष मविज्ञेयं, तस्य महिषासुरस्य, उद्वृत्तस्य मर्यादारहितस्य, वृत्तं चरित्र मभिधेयं कथ्यताम् । परस्परं सेनाद्वयमध्ये युद्धोन्मुखेषु युद्धकरणाय सज्जेषु, जयं युद्धं प्रशस्तं श्रेष्ठं प्रहितं प्रेषितम् । तद्बलेन महिषासुरसैन्येन, कुलिशकलितपाणिः

माभिलाषेण रोषेण महताविष्टःप्रवलरुषा तेन द्विषा युद्धमकार्षम् । किन्तु मामपि सः दुष्टमहिषः पराजितवान् । सत्यमुक्तं भगवत्या सरस्वत्या—

सबलोभवति सुदुर्बलो लब्ध्वा समयबलम् ।
प्राप्य तदेव हि दुर्बलो जेतुं सबलमलम् ॥४॥

**विष्णुः**

तथ्यं प्रजल्पति भवान् खलु दानवारे,
मिथ्याप्रलापनकला प्रतिभाति नात्र।
यत्नं चकार महिषासुरमारणाय
कालो न संवदति चेत्तव कोऽत्र दोषः ॥५॥

**इन्द्रः**—पुनश्च सः

तत्पुरी मुररीकृत्य दुष्कृत्यमिदमातनोत् ।
अमदनन्दनोद्यान मभञ्जदसमञ्जसः ॥६॥

**किंच—**

कल्पद्रुमात्मसात्कृत्य कामदां कामधेनुकाम् ।
स्वर्गस्त्रीणां कचग्राहं दुर्मतिः कर्तुमिच्छति ॥७॥

---

कुलिशो वज्रस्तेनकलितो युक्तः पाणिर्हस्तं यस्य सः । द्विषा शत्रुणा, सवलइति । सवलोवलवान् सुदुर्वलो व लरहितः । तदेववसमयवलम् । अलं समर्थः । तथ्यमिति । तथ्यं सत्यं, मिथ्याप्रलापनकला, असत्यभाषणलेशोपि नात्रभाति । कालः समयः नसंवदत्यनुकूलो नास्तिचेद्यदि तवेन्द्रस्य । स महिषासुरः पुरीममरावतीं, उररीकृत्य गृहीत्वा, इदं वक्ष्यमाणम्, दुष्कृत्यमातनो चकार । अमन्देति । अमन्दं सुन्दरं-नन्दनवनं अभंजत् भजित्रोटनेचान्द्रव्याकरणे, असमंजसो दुष्टः ।

कल्पद्रुं कल्पवृक्षं, आत्मसात्कृत्य वलादगृहीत्वा ।

विष्णुः—ततस्ततः ?

कत्यश्वान् कति वा नागान् कत्यनर्घ्यमणिच्छटाः
कत्यमूल्यदुकूलानि जगृहु स्तस्य नो भटाः ॥८॥

रुन्धते धनदागारं भिन्दते यमयातनाः ।
विचरन्ति यथाकामं हरन्ति विबुधाङ्गनाः ॥

किं नासन् दानवाः पूर्वं किंन स्वर्गस्य विप्लवः ।
परमाश्चर्यचर्यस्य तस्य कोपि समो न वै ॥९॥

संप्रति च तस्यायमाशयः

विष्णुः—(स्वगतम्) किमतः परमपि वदिष्यति ।

इन्द्रः—

वस्तव्यं वासवावासे विहर्तव्यं यथेच्छया ।
हन्तव्यं द्युसदां वृन्दं प्राप्तव्यं सकलं धनम् ॥१०

विष्णुः—(प्रकाशम्) पुरन्दर, परमेयं सीमा दौर्जन्यस्य ।

इन्द्रः देव,

नो मे पराजय कृतेविकृते र्लवोपि
यस्माज्जयो भवति किंच पराजयोपि ।

---

नागान् हस्तिनः, अनर्घ्यमणिच्छटा अमूल्यरत्नानि । तस्य महिषासुरस्य, भटाः किंकराः, धनदागारं कुबेरगृहं देवनिधिमित्यर्थः । रुन्धते अरुन्धन्, यमयातनाः पापिपुरुषै र्गन्तव्यस्थानानि भिन्दते व्यदारयन्, यथाकामं यथेच्छं विबुधाङ्गनाः सुरस्त्रियः हरन्तिचोरयन्ति, अतीतं कृत्यं प्रदर्श्य संप्रति ततोप्यनिष्टंकर्तुमिच्छतीत्याह संप्रतिचेति

विकृतेः मनोविकारस्य लवोपि लेशोपि, यस्मादिति । युधि शतकृत्वो विजयन्ते

किन्त्वेष एव बहुशो मम शोकहेतुः
यत्स्त्रीकुलान्यपि बलात्स तिरस्करोति ॥११॥

विष्णुः—इन्द्र, अलमेतया कथया । यतोहि—

कृता दुरात्मनां व्यर्था कथापि जनयत्यघम् ।
श्रेयस्कामयमानैः तज्जनैः सा परिहीयताम् ॥१२॥

इन्द्रः—देव, नातः परं किमपि सारम् ।

सर्वेवयमतीवदुःखमापन्ना युष्माकमभूम प्रत्यासन्नाः ।
इदानीं तद्वधोपायचिन्ताभरः युस्मासु निर्भरः ।

विष्णुः—इन्द्र, अलमेतया चिन्तया

विष्णौ मयि द्विषां जिष्णौ शङ्करे भक्तशङ्करे ।
बुद्धिश्रेष्ठे सुरज्येष्ठे चिन्तासन्तापयेत्तु का ॥१३॥

(निर्ध्याय) ननु विचारितो मया निरपाय स्तद्वधोपायः ।

शंकरः—विष्णो, कः उपाय स्त्वया समयानुकूलश्चिन्तितः ।

विष्णुः—देव, त्वया मया ब्रह्मणा चान्यै र्देवै र्मिलित्वा स्वस्व-
तेजसा सहसा एका स्त्री सकलास्त्रिणी निर्मातव्या । तयाच
स्त्रीरूपया शक्त्या स दैत्यपतिरवश्यं प्रतिकर्तव्यो भविष्यति ।

---

पराजीयन्ते च वीरा स्तत्र न विषादः । किं तर्हि विषादकारण मित्याह—किन्त्विति । स महिषासुरः, तिरस्करोति निर्लज्जयति, अघं पापं, सा कथा सर्वे वयंदेवाः, प्रत्यासन्ना अभूम शरणमागताः, तद्वधोपायः महिषासुरवधस्योपायः, युष्मासु ब्रह्म विष्णु महेश्वरेषु. ननु संबोधने निरपायो निर्विघ्नः ।

सकलास्त्रिणी सर्वशस्त्रसहिता, निर्मातव्या विधातव्या, प्रतिकर्तव्यः हन्तव्यः

शंकरः—(ध्यात्वा) साधु भगवन् साधु सुष्ठु विचारित मत्रभवता भवता ।

विष्णुः—देव, तर्हि क्रियता मुपक्रमः ।

शंकरः—कृतं मया सुखसदनं स्त्रियो वदनम् । पश्यन्तु भवन्तः ।

(सर्वे सविस्मयं विलोकयंति ।)

यमः—अयमहं करोमि स्वतेजसा केशान् ।

विष्णुः—अहं च करोमि प्रबलं बाहुयुगलम् ।

सोमः—करोम्यह मतितिग्मं स्तनयुग्मम् ।

इन्द्रः—अहमुदरं करोम्यतिवरम् ।

वरुणः—अयमहं करोम्यतिघनं जघनम् ।

भूमिः—भवतु मत्तः सरागः नितम्बभागः ।

ब्रह्मा—करोम्यहं दत्ताभक्तविषादौ पादौ ।

सूर्यः—अयमहं करोमि भक्तार्पितपुष्पांजली रंगुलीः ।

वसवः—कुर्मो वयं समस्ता हस्तांगुलीः ।

कुबेरः—नमे शङ्का नासिका करणे ।

वह्निः—अहं करोमि तेजोमयीं नेत्रत्रयीम् ।

सन्ध्ये—आवां कुर्वः कौटिल्यमयं भृकुटिद्वयम् ।

वायुः—करोम्यहं भक्तार्थनाश्रवणप्रवणौ श्रवणौ ।

---

उपक्रमः प्रारम्भः स्त्रियोवदनं स्त्रीमुखं सविस्मयमिति । क्रियाविशेषणानां कर्मत्व मिति द्वितीया । यमो धर्मराजः । सोम श्चन्द्रः, भूमिः तदधिष्ठातृ देवता, सरागः रागसहितः रागो रक्तिमा । नितम्बभागः कटिभागः, अंगुलि शब्दस्य स्त्रीत्वं कोषप्रामाण्यात् । कौटिल्यमयं कुटिलतापूर्णम् श्रवणौ कर्णौ

शंकरः—भगवन् विष्णो, सिद्धं वः समीहितम् ।

विष्णुः—देव, शस्त्रदानं सम्प्रति भगवत्याः सम्मानम् ।

शंकरः—अयमहं (ददाम्यस्यै) सकलरिपुनाशमूलं शूलम् ।

विष्णुः—अहं चातिवक्रं चक्रम् ।

इन्द्रः—अहं शत्रुरक्तमलीमसं कुलिशं तीव्रस्वनच्छटां घण्टां च ।

सूर्यः—अहंसर्वरोमाभरणान् किरणान् ।

वरुणः—अहं चाति प्रेङ्खं शङ्खम् । शत्रुनिरासं पाशं च ।

वायुः—अह मतिदुष्प्रापं चापम् ।

वह्निः—अहमरिविरक्ति शक्तिम् ।

यमः—अहं कृतारिखण्डं दण्डम् ।

समुद्रः—अहं च सौन्दर्यसारं हारं विजरे अम्बरे भासाधरीकृत द्युमणिं चूड़ामणिं हाटकमयं कटकद्वयम् । नपुरौ कर्णपूरौ निर्मलां मालां च ।

विश्वकर्मा—अहं कृतानेकनिरसुं परशुम् ।

हिमाचलः—अहं च निरालस्यं पंचास्यं चिरत्नानि रत्नानि च ।

कुबेरः—अहमेकमात्रं सुरापात्रम् ।

शेषः—अहं मुग्धाकारं नागहारम् ।

(सर्वे देवीं दृष्ट्वा परमानन्दं विन्दन्ति मिलित्वा च स्तुवन्ति)

---

कुलिशं वज्रम्, अतिप्रेंखं महानादम्, दुष्प्रापं दुर्लभं, शक्ति शस्त्रविशेषम् । दण्डं कालदण्डं, विजरे निर्मले अम्बरे वस्त्रे, हाटकमयं सुवर्णघटितं कटकद्वयं कंकणद्वयम्, नूपुरौ मंजीरौ कर्णपूरौ कर्णभूषणौ परशुं कुठारं, पंचास्यं सिंहं एकमात्र मद्वितीयं मुग्धाकारं सुन्दराकृतिम् ।

त्वमेका देवि देवानां नौकावैदु:खसागरे ।
सिद्धयै बुद्धयै तथा वृद्धयै रुद्राण्यै ते नमोनमः ॥१४

देवी—निर्भयाः सन्तु गीर्वाणाः मद्बाणाद्गतचेतनम् ।
हनिष्याम्यद्य संग्रामे महिषं दुष्टचेतसम् ॥१५

विष्णुः—कल्याणं कुरु नो दुर्गे सुरगेयपदाम्बुजे ।
स्त्रीवध्यवरदुर्धर्षं निहत्य महिषं रणे ॥१६

ब्रह्मा—(हस्तमुद्यम्य) भगवति,
भवत्यै भवतु स्वस्ति निरस्तिः तव विद्विषाम् ।
विबुधाः सन्तु सन्तुष्टाः त्वया हतविपत्तयः ॥१७

किंच—यावत्सनातनो धर्मः यावच्चन्द्रदिवाकरौ ।
तावद्गास्यन्ति कवयः तावकं विमलं यशः ॥१८॥

अपिच,—धन्यं जगति तज्जन्म धन्यं मान्यं च तत्कुलम् ।
धन्यौ तज्जननीजन्यौ यस्त्वांभक्त्यार्चयिष्यति ॥१९

देवी—परमनुगृहीतास्मि जिष्णुना विष्णुना ब्रह्मणा च ।
प्रमोदनिद्रोपेतव्या गत्वा स्वं स्वं निकेतनम् ।
निःशङ्कं स्वस्वपर्यङ्कं सम्प्रत्यध्यास्य पूर्ववत् ॥२०
अहमपीदानीं प्रस्तुतकार्यसाधनाय साधयामि ।
इति निष्क्रान्ताः सर्वे ॥ इति द्वितीयोऽङ्कः ॥

---

उद्यम्योत्थाप्य भवत्यै देव्यै स्वस्ति क्षेमं भवत्वित्याशिषि लोट् । निरस्तिः निराशः पराजय इतियावत् । विद्विषा मसुराणाम् । विबुधा देवाः, चन्द्रदिवाकरौ चन्द्रसूर्यौ, तावकं त्वदीयं, धन्यं धन्यवादार्हम्, जननीजन्यौ मातापितरौ, अर्चयिष्यति पूजयिष्यति, निकेतनं स्थानं,पर्यङ्कं शय्यामध्यास्य, साधयामि गच्छामि । इति दुर्गाभ्युदय नाटकसंकेते द्वितीयाङ्कविवरणम् ।

# अथ तृतीयोऽङ्कः ।

(ततः प्रविशति इन्द्रो बृहस्पतिश्च)

इन्द्रः—गुरो, अस्मदा गमानन्तरं भगवत्या देव्या दुष्टमहिषादीनां वधाय कथमुपक्रान्तमिति न ज्ञायते। (दक्षिणाक्षिस्पन्दनं सूचयित्वा।) अये,

स्फुरितै दक्षिणं नेत्रमत्रकार्येऽनुकूलताम् ।
सर्वथा शंसतीवाद्य सद्यः सुरसमीहिते ॥१॥

बृहस्पतिः—मघवन्, दिष्ट्या वर्धसे ! यतः भवत्प्रेषितः

भवन्तं प्रतिवृत्तान्तं तत्रत्यं सकलं मुनिः ।
अयमाख्यातुमायाति सहसात्र विहायसा ॥२॥

नारदः—(प्रविश्य) महेन्द्राज्ञया भगवतीपार्श्वे गत्वा समागतोऽस्मि । सम्प्रति दिवस्पति मुपसरामीति परिक्रामति ।

इन्द्रः—अये, महर्षिर्नारदः ! तदासनमानीयताम् ।
(बृहस्पति रासनमानयति । नारद उपविशति ।)

इन्द्रः—भगवन्, कथय कथमस्ति ।

---

स्फुरितैरिति । दक्षिणं नेत्रं स्फुरितैः स्फुरणैः भावे क्तः । सुरसमीहिते कार्ये सद्यो झटित्यद्यानुकूलतां संशतीव सूचयतीव । दक्षिणाङ्गस्फुरणं शुभसूचकं यदुक्तं सामुद्रिकशास्त्रे—'वामभागस्तु नारीणां पुंसां श्रेष्ठस्तु दक्षिण इति ॥ दिष्टचेत्यानन्दे । मुनिर्नारदः, अयमित्यंगुल्या निर्देशः । विहायसा ऽकाशमार्गेण, दिवस्पति मिन्द्रम्, अयेइति संबोधनं हर्षे, कथय-श्रावय, कथमस्ति किं वृत्तं वर्तते,

नारदः—मघवन्, प्रत्यक्षेणानुभूतमाचक्षे ।

सा भगवती कृतदुष्टविषादं शंखनादं कृत्वा सकलमपि विकलयामास । किं बहुना तेन शब्देन अचला चलाभूत् समुद्रा निर्मुद्रा महीधरा श्चलनपरा आसन् । कुतोऽयं कस्यायं शब्द इति संदिहाना नाना देवदानवा भगवतीपार्श्वमाजग्मुः । दृष्ट्वा च देवाः प्रसन्ना बभूवुः । प्रत्यासन्नाश्च परमक्रुधा युद्धाय परःसहस्रमुत्कटा महिषादिभटाः ।

इन्द्रः—ततस्ततः ?

नारदः—ततश्च—

शस्त्रैर्वृतां कृतरुतां पदयोः क्रमेणा-
क्रान्तक्षितिं स्थितिमतीं गगनेऽपि दृष्ट्वा ।
तां सेवितां मुनिजनै र्महिषो दुरात्मा
स्वान् सैनिकानिति रुषा सहसानुजज्ञे ॥ ३ ॥

इन्द्रः—कथमिव ?

नारदः—

रे चिक्षुर ! त्वमधुना क्षुरवद्धवाजौ
रे चामर ! त्वमधुना त्यज पामरत्वम् ।

---

आचक्षे—कथयामि, सकलमपि भुवनमित्यर्थः । अचला पृथ्वी, निर्मुद्रा मर्यादारहिताः, महीधराः पर्वताः, संदिहानाः सन्देहं कुर्वाणाः, प्रत्यासन्नाः समीपस्थाः चकारेण बभूवुरित्यनुकृष्यते । शस्त्रैर्वृतां सर्वास्त्रसहितां कृतरुतां कृतशंखनादां पदयोः क्रमेण पादन्यासेन, चिक्षुरेति दैत्यनाम । शस्त्रविशेषः क्षुरः उस्तरेति भाषायाम् । तद्वत्, चामरेतिदैत्यनाम, पामरत्वं लघुत्वम्, आजौ

युद्धं महाहनुवदुग्रमुदग्र ! कुर्याः
त्वं बाष्कल ! त्यज बिड़ाल ! च कालभीतिम् ।। ४ ।।

इन्द्रः—ततस्ततः ?

नारदः—तदनु क्षणेनैव—

ते भिन्दिपालै र्मुसलैः पाशैः परशु-पट्टिशैः ।
देव्यां प्रहारञ्चाचक्रुर्बहुक्रूरैश्च तोमरैः ।। ५ ।।

इन्द्रः—(सविषादम्) एवं सति किं कृतवती भगवती ?

नारदः—

देवी दिव्यानि शस्त्राणि तत्प्रयुक्तानि तत्क्षणम् ।
लीलयैव प्रचिच्छेद शत्रुच्छेदकृतोद्यमा ।। ६ ।।

किंच—

विराजमाना समरे स्तूयमाना महर्षिभिः ।
असुरांस्ताड़यामास गदया निर्दया सती ।। ७ ।।

इन्द्रः—ततस्ततः ?

नारदः—देवराज ! इदमत्र विचित्रमासीत् ।

इन्द्रः—किं नाम ?

नारदः—युद्धं कुर्वती भगवती यानसुरान् शस्त्रास्त्रैः भूमौ पातयामास ते सर्वेपि पुनरुत्थायोत्थाय शस्त्राण्यादाय स्वैरेव सममसमं युयुधुः ।

---

युद्धे, उदग्रेति दैत्यत्नाम, महाहनुना दैत्येन तुल्यं महाहनुवत् उग्रं महद्युद्धं कुर्याः । बाष्कलेति बिड़ालेतिच दैत्ययोर्नामिनी । ते दैत्याः भिन्दिपालैः दोलाभिः (गोफनाओं से); पट्टिशैः—लोहदंडैः "पट्टिशो लौहदण्डो यस्तीक्ष्णधारः क्षुरोपमः" वैजयन्ती । तोमरैः शल्यैः, "शल्यं तु तोमर" इत्यमरः । तत्प्रयुक्तानि दैत्यैः प्रेरितानि, शस्त्राणि भिन्दिपालादीनि, लीलयैव अनायासेनैव, समरे युद्धे, अत्र युद्धे विचित्र माश्चर्यम् । शस्त्राण्यादाय गृहीत्वा, स्वैः स्वकीयैः, युयुधुः युद्धं चक्रुः ।

इन्द्रः—भगवतीशक्तिरेवात्र प्रभवति ।

नारदः—अथकिम् !

इन्द्रः—ततस्ततः ?

नारदः—तदनन्तरं परं प्रहृष्टाः सन्तः

पटहान्वादयामासुः केचित्तत्र सुरारयः ।
परे मृदङ्गानपरेऽसंख्यान्शङ्खाँस्तथैव च ॥ ८ ॥

एवं सति,

देवीपंचाननस्तेषु वनेष्विव हुताशनः ।
पर्यभ्रमद्धुतसटः प्रभूताक्रान्तदुर्भटः ॥ ९ ॥

तथाहि—

कांश्चिन्निपातयामास मथयामास कांश्चन ।
कांश्चिदेकाक्षिचरणान् क्षणान्मध्येरणं व्यधात् ॥ १० ॥

किंबहुना—

सिंहेन पातितैरश्वै रसुरैश्च वसुंधरा ।
विलोक्यतेस्म तत्रत्या सर्वलोकभयङ्करा ॥ ११ ॥

---

अत्र विलक्षणघटनायाम्, प्रभवति सर्वमिदं कर्तुं समर्था, तत्र संग्रामभूमौ, सुरारयो दैत्याः, मृदंगान् वाद्यविशेषान्, असंख्यान् बहून् । देवीपंचाननो देवीसिंहः, तेषु दानवेषु, वनेषु काननेषु, हुताशनो वह्निरिव, पर्यभ्रमत् सर्वतो बभ्राम, धुता विक्षिप्ता सटा येन । मध्येरणं रणमध्ये, पारे मध्ये षष्ठ्या वा । वसुंधरा पृथ्वी, तत्रत्या संग्रामीया, विलोक्यते स्म सर्वैर्दृश्यते स्म,

केचित्खलु—

पतिताः पुनरुत्थाय प्राणमादाय दानवाः ।
प्राद्रवन् दिक्षु विक्षुब्धा रणात्परमदारुणात् ॥ १२ ॥

इन्द्रः—एवं सति किं कृतवन्तः चिक्षुरादयः सेनापतयः ?

नारदः—चिक्षुरः कैश्चिदसुरैः परिवृतोऽखर्वेण गर्वेण विराजमानो मानोन्नतः क्रूरदृष्ट्या शरवृष्ट्या च देवीमाच्छिदत् ।

इन्द्रः—(सभयम्) ततस्ततः ?

नारदः—देव्यपि तत्प्रहितान् शरान् छित्वा धनु रनु भित्वा च तं चकारास्तम् ।

इन्द्रः—(सहर्षम्) ततस्ततः ?

नारदः—ततो महापामरः चामरः शूलमादाय देवीं प्रहृतवान् । देवी तु क्षणेनैव तच्छूलमुन्मूलयित्वा तं च मूर्च्छितं चकार ।

इन्द्रः—ततस्ततः ?

नारदः—तदनु महानुग्र उदग्रश्च देवीमुष्टितलात्प्रहृतः पलायितः । एवमेव कराल-विकराल-वाष्कल-बिड़ाल-प्रभृतयोपि कृत-युद्धविरतयो बभूवुः ।

अत्रान्तरे पश्यतां साधुवादेन सिद्धचारणगणानां पुष्पवर्षेण

---

पतिता भूमौ, प्राण मसून् विक्षुब्धाः संत्रस्ताः, अखर्वेण महता, तत्प्रहितान् चिक्षुरमुक्तान्, शरान् वाणान् अस्तं परास्तं चकार, महापामरो दुष्टः, मूर्च्छितं मूर्च्छायुक्तं, प्रहृत स्ताड़ितः, पलायितः प्राद्रवत्, करालेत्यादीनि चत्वारि दैत्यनामानि । अत्रान्तरे अस्मिन्समयमध्ये "अन्तरमवधिमध्ययो" रितिरत्नमाला । साधुवादेन देव्या धन्यत्वसूचकेन साधुसाध्वित्युच्चारणेन, पुष्पवर्षेण पुष्पवर्षा-करणेन,

च समराङ्गणं पर्यंपूर्यंत ।

इन्द्रः—अहो ! देव्या धैर्यं गम्भीर्यं वीर्यं च यत्परःशतदानवाक्रान्तापि न श्रान्ता ।

नारदः—तदनु दनुजाधिपति र्मंहिषासुरः संग्रामभूमि मागत्य—

सर्वसैन्यं मृतं मत्वा कृत्वा रूपं हि माहिषम् ।
निराशः त्रासयामास, गणान् देव्या रणागतान् ॥१३॥

तथाहि—

कांश्चित्तुण्डेन मुण्डेन कांश्चिल्लांगूलाताडनैः ।
कांश्चित् शृंगेण रिंगेण कांश्चित्पादविलोड़नैः ॥१४॥

किं बहुना तस्य तदानीम्

वेगेन भ्रमणात्क्षमापि परितः शीर्णा समालक्ष्यत,
लांगूलेन बिलोड़ितस्य जलधेरुल्लंध्य वेला ययौ ।
शृंगाभ्यामवलोड़िताः प्रतिययुः खण्डत्वमम्भोधराः :
निःश्वासाभिहता मुहु र्निपतिता धात्र्यां धरित्रीधराः ॥१५॥

इन्द्रः—(सविस्मयम्) ततस्ततः ?

नारदः—तदनु देवीधनुर्ज्याटंकारः दशाप्याशाः पूरयामास ।

इन्द्रः—ततस्ततः ?

---

समरांगणं समरभूमिः, पर्यंपूर्यंत परिपूर्णं जातम् । दनुजाधिपति रसुरसम्राट् । महिषः प्रसिद्धः पशुः, तदीयं रूपं कृत्वा, निराशो विजयाशारहितः । त्रासप्रकारमाह—तथाहीति कांश्चि द्देवीगणानित्यर्थः । तुण्डेन मुखेन, मुण्डेन मस्तकेन शृंगेण विषाणेन, रिंगेण शब्देन, तस्य महिषासुरस्य, क्षमा पृथ्वी लांगलेन पुच्छेन, वेला नीरं, धात्र्यां पृथिव्यां, धरित्रीधराः पर्वताः । आशा दिशः

नारदः—

तं क्रोधपूरिताक्षं दृष्ट्वा देव्यप्रयासेन ।
उत्पत्य खं बबन्ध लघ्वात्मीयेन पाशेन ॥१६॥

इदं पुनरतुलं कुतूहलं तत्रालोक्यतेस्म !

इन्द्रः—किं नाम ?

नारदः—दनुजेश्वरो महिषासुरो माहिषं वपुर्विहाय सिंहाकृतिं विधाय च देव्याः सिंहेन सममसमं युयोध । यावद्देवी तं हन्तुं खड्गमसेविष्ट तावदकस्माद् विस्मापयन्नभूत्परुषः पुरुषः ।

इन्द्रः—ततस्ततः ?

नारदः—पुनश्च

यावद्भूत्वा युधि गजः स जगर्ज मुहुर्मुहुः ।
देवी तावत्तमस्त्रेण करेण रहितं व्यधात् ॥१७॥

इन्द्रः—प्रियतरं नः । ततस्ततः ?

नारदः—तदनु महिषदुष्टः स्वौजसातिप्रहृष्टः
निजवपुषि समास त्रासयन्सर्वलोकम् ।
मुहुरपि च ननर्द क्ष्मारजांसि ममर्द
प्रबलतरविषाणः पर्वतोच्चैः प्रमाणः ॥१८॥

इन्द्रः—ततः किमकरोद्देवी ?

नारदः—(महाट्टहासं कृत्वा) सरोषमिदमाह—

---

तं महिषासुरं, अप्रयासेन कुतुकेनैव, खम् आकाशम् उत्पत्य स्थित्वा, लघु शीघ्रम् आत्मीयेन स्वेन, पाशेन बबन्ध । कुतुहलम् आश्चर्यं, परुषो भयंकरः । गजो हस्ती, निजवपुषि महिषरूपे, समास तिष्ठतिस्म, क्ष्मारजांसि भूरेणून्, सरोषं सक्रोधं, इदं वक्ष्यमाणम्, आह उवाच,

रे मूढ ! त्वं तावदेव यावत्सुरां पिबामि ।
गर्ज तर्ज वाऽनन्तरं त्वां यमसद्म नयामि ॥ १९ ॥

इन्द्रः—ततस्ततः ?

नारदः—तदनु परस्परं संवोध्य भगवत्यसुरयोः महान्संपरायो भवितु मारब्धः। एतदन्तं रणवृत्तान्तं भवते निवेदयितु-मागतोऽस्मि। (कर्णं दत्त्वा) मघवन्, श्रूयतां श्रूयतां कस्याय-मतिप्रचण्डो ध्वनिरनुश्रूयते ।

इन्द्रः—(श्रुत्वा) भगवन्, कस्याऽयं स्यात् ?

नारदः—शचीवयस्य ! इदमन्यदाश्चर्यं, पश्य ।

इन्द्रः—किमिव ?

नारदः—(हस्तेन दर्शयन्) इदं सकलं भुवन-भवन-गिरि-सरिदसुर-सुर-नर-नगर-रूपं जगत्कम्पितु मारब्धम् !

इन्द्रः—कथमकाण्ड एव करालः प्रलयकालः समागतः ?

नारदः—(स्मृतिमभिनीय) आ ज्ञातम् ! भगवतीहेतिहतिनिपतितस्य महिषासुरस्य भवेत् ।
(आकाशे) भो भो देवाः प्रवर्तन्तां रंगमंगलानि ।

दर्पोद्धतानसुर-चिक्षुरवाष्कलादीन्,
निष्पीड्य सा भगवती तरसा विधाय ।

---

सुरां मदिरां, यमसद्म यमालयं, नयामि प्रापयामि, परस्परं महिषासुरो देवीं देवी महिषासुरं, संपरायो युद्धं एतदन्त मेतत्पर्यन्त मित्यर्थः। निवेदयितुं कथयितुं शचीवयस्य, शचीपते, अकाण्डे ऽनवसरे, हेतिहति खड्गप्रहारः। दर्पोद्धतान् दर्पदृप्तान् वाष्कलादीन्, सा भगवती तरसा बलेन,

शून्यं जगन्महिषतः स्वबलोत्करेण
सर्वान् दिदृक्षति सुरांश्च सुरेश्वरेण ।। २० ।।

(सर्वे शृण्वन्ति)

नारदः—मघवन्नाकर्णितं जातः सम्प्रति निर्णयः ।

इन्द्रः—अथ किम् !

नारदः—तदेहि सकलसुरसमेता वावां कृतकार्यां भगवती मवलोकयावः । इत्युभावपि निष्क्रान्तौ ।

(नेपथ्ये)

भो भो गणाः कथयत क्व च वर्तते सा,
देवी स्वभक्तजनताखिलतापहर्त्री ।
या चिक्षुरादिसहितं च कथावशेषं
कृत्वाऽद्य दुष्टमहिषं सुरसौख्यकर्त्री ।।२१ ।।

देवी—(श्रुत्वा) ननु ज्ञायतां कोऽयमिति ।

(देवीपुरुषो निष्क्रम्य पुनः प्रविश्य च) भगवति, येनायं सेनासमेत आयाति ततो ज्ञायते कश्चिदसुरो भवेत् ।

देवी—धिङ्मूर्खं, मत्करालकरवालविमलधाराजलमग्नानामसुराणां क्व सम्प्रति नामापि, तन्नूनं कश्चन सुरो भवेत् ।

---

'तरसीवलरंहसीति' विश्वः । निष्पीड्य निहत्य स्वबलोत्करेण, महिषासुराच्छून्यं जगत् विधाय च सुरेश्वरेण इन्द्रेण समं सर्वान्सुरान् द्रष्टुमिच्छति । दुष्टमहिषं कथावशेषं कृत्वा हत्वा, सुरसौख्यकर्त्री देवदुःखहर्त्री, धिङ्मूर्खं, धिग्भर्त्सने निन्दायां च । करालः तीक्ष्णः, करवालः खड्गः, तन्नूनं निश्चयेन, सुरो भवेत्, सुरो देवः, भवेदस्ति ।

इन्द्रः—(प्रविश्य) सर्वगुणप्रशस्ते भगवति देवि ! नमस्ते ।

देवी—(विलोक्य) देवराज ! इदमासनं सभाजय ।

(सर्वो देवसमूहो महेन्द्रमभितः स्थितः)

इन्द्रः—(कृताञ्जलि र्भूत्वा)

देवि, त्वत्कीर्तिं न वै ब्रह्मा वक्तुमलम् ।
श्रीपति रथ गौरीपतिः किंवा भूरि बलम् ॥ २२ ॥

त्वं वै पुण्यवतां गृहे लक्ष्मीरूपधरा ।
हृदये प्रतिभाशालिनां बुद्धिः श्रेष्ठतरा ॥२३ ॥

किन्ते वीर्यं वर्णया म्यसुरक्षयकारि !
ब्रह्मविष्णुहरतोऽधिकं मत्तमानहारि ! ॥ २४ ॥

त्वं मुमुक्षुभि र्ध्यायसे मुक्तिहेतु रखिलैः ।
त्वामालोक्य न भूयते शत्रुमित्रविकलैः ॥ २५ ॥

त्वं मेधा श्रद्धावतां नृणां मतिप्रदा ।
पुण्यवतां पापात्मनां यथायथं फलदा ॥ २६ ॥

त्रिभुवनसारा यावदत्रभवती नाराधि ।
तावदपैति न सर्वथा जन्ममृतिव्याधिः ॥ २७ ॥

लोके भवति नरः स वै धनी कीर्तिपात्रम् ।
करुणाया यस्मि स्तवाप्यस्ति लेशमात्रम् ॥ २८ ॥

---

सभाजय अलंकुरु, श्रीपति विष्णुः, गौरीपतिः शङ्करः, वीर्यं वलं, शत्रुमित्रविकलैः शत्रुमित्राभ्यां द्वेषरागाभ्यां विकलैर्दुःखितैर्न भूयते । नाराधि नाराधिता, कर्मणि लुङ् । जन्ममृतिव्याधिः जन्ममरणदुःखं न अपैति न नश्यतीत्यर्थः । करुणायाः कृपायाः लेशमात्रं स्वल्पापि करुणेत्यर्थः । आर्तैः पीडितैः

स्मृता त्व मार्तैर्ध्वंससे सर्वदैव भीतिम् ।
स्थिरचित्तै र्ध्याता पुन र्दत्से शुभां मतिम् ॥ २९ ॥

कामधेनुचिन्तामणी कामितचिन्तितदौ ।
कल्पितदः कल्पद्रुम श्चरणौ ते ऽखिलदौ ॥ ३० ॥

संसृतिरूपविषद्रुमे रसवत्फलद्वयी ।
सत्सङ्गतिरथ ते स्मृतिः पदयोर्भक्तिमयी ॥ ३१ ॥

देवी—शचीपते, प्रसन्नास्मि ते स्तुतेः ।

गत्वा स्वस्थान मधुना स्वाराज्य मुपभुज्यताम् ।
यथा पुराधिकाराश्च त्वया देया दिवौकसाम् ॥ ३२ ॥

किंचान्यदापि यथासमयं स्मृताहं मुपस्थास्यामि ।

इन्द्रः—(प्रणिपत्य सर्वैः सह निष्क्रान्तः ।)

देवी—अहमप्याद्यशक्तिं वन्दितुं साधयामि ।

इति निष्क्रान्ताः सर्वे ।

इति तृतीयोऽङ्कः ।

---

भीतैरितियावत् । दत्से ददासि, चरणौ पादौ, 'पदं घ्रिश्चरणोऽ स्त्रिया'मि त्यमरः । संसृतिः संसारः । सत्संगतिः विद्वत्संसर्गः ते तव, पदयोः, स्मृतिः स्मरणम् स्वाराज्यं स्वर्गाधिपत्यसुखं, 'अर्थप्रसंगमादाय पात्रनिर्गम इष्यते' इत्यनुसंधायाह इति निष्क्रान्ताः सर्वे । इति दुर्गाभ्युदयनाटकसंकेते तृतीयाङ्कविवरणम् ।

# अथ चतुर्थोऽङ्कः

(ततः प्रविशति देवदूतः)

**देवदूतः**—आज्ञप्तोऽस्मि सर्वैरपिदेवैर्यथा-देवल ! सम्प्रतीन्द्रः कस्मिन्-स्थाने किं कुर्वन्नास्ते इति विदित्वा सत्वरमागच्छत्विति। तत्तेषा मनुज्ञा मनुतिष्ठामि । (इति परिक्रामति)

**देवनन्दी**—(प्रविश्य) स्वामिन्, देवदूतो देवलो विज्ञापयति विज्ञाप्यं मे किंचिदस्तीति ।

**इन्द्रः**—ननु प्रवेश्यताम् ।

**देवदूतः**—(प्रविश्य) अये, अयमिह महेन्द्रोपि किंचित्सशोक इव लक्ष्यते । अथवा

इन्द्रस्यापि सुखं नास्ति तथ्यैवैषा जनश्रुतिः ।
यद्रागद्वेषतो प्येष प्रसीदति विषीदति ॥१॥

तदेन मुपसरामि । (इत्युपसृत्य) जयतु जयतु भगवान्मघवान् ।

---

इदानीं चतुर्थाङ्कप्रतिपन्नमर्थं सूचयितुं देवदूतप्रवेशमाह— ततः प्रशिति देवदूत इति । आज्ञप्तमर्थमाह यथेति । देवलेति देवदूतस्य नाम । आस्ते तिष्ठति, विदित्वा ज्ञात्वा, सत्वरं शीघ्रम् । तस्मात्तेषां देवाना, मनुज्ञा माज्ञा मनुतिष्ठामि संपादयामि, इन्द्रस्यापि अन्येषां तु कथैव केति व्यज्यते । तथ्यैव सत्यैव, जनश्रुतिः किंवदन्ती लोकभणितिरितियावत् । रागद्वेषतो रागद्वेषाभ्यां, सार्वविभक्तिकस्तसिः । प्रसीदति प्रसन्नो भवति, विषीदति दुःखीभवति यथासंख्यमन्वयो

इन्द्रः—देवल ! अस्ति कश्चिदपश्चिमो वृत्तान्तः ?

देवदूतः—स्वामिन्, अस्ति कोपि चिन्तारोपी देवसन्देशः तं स्वामी श्रोतुमर्हति ।

इन्द्रः—अवहितोऽस्मि ।

देवदूतः—

देव, सर्वे सुरगणाः कुबेरवरुणादयः ।
भवन्तं प्रति वृत्तान्तं मन्मुखा देन मूचिरे ॥२॥

इन्द्रः—ननु शीघ्र मनूद्यताम् ।

देवदूतः—

शुंभेन च निशुंभेन वयं सर्वे निराकृताः ।
बलात्कारान्नोधिकारान् गृहीत्वा सकलानपि ॥३॥

इन्द्रः—सर्वथा विदित एवाह मेतेन वृत्तेन । त्वमिदानीं शीघ्रमेव गत्वा मद्वचनादेवं ब्रूहि यदिन्द्रः सर्वानपि वः प्रतीक्षमाणस्तिष्ठतीति ।

देवदूतः—यथाज्ञापयति स्वामी । (इति निष्क्रान्तः)

(सर्वे प्रविशन्ति)

(परस्परं नमस्कृत्य यथोचित मुपविशन्ति च)

इन्द्रः—भो भो देवाः प्रतिशुश्रूषति मन्मनो यत् सर्वैरप्यस्माभी राज-

---

वोध्यः । अपश्चिमो नवीनः चिन्तारोपी चिन्ताजनकः, ननु संबोधने अनूद्यता मनुवादः क्रियताम् सिद्धस्यकथनमनुवादः । वयं सर्वे देवाः, निराकृताः स्वर्गाद्- बहिष्कृताः, वो युष्मान् प्रतीक्षमाणः प्रतिपालयन्, प्रतिशुश्रूषति स्वीकरोति राजराजगिरौ हिमालयपर्वते, सर्वै रप्यस्माभिर्देवैः,

राजगिरौ गत्वा तपस्तप्त्वा च सैव भगवती दुर्गा स्वर्गालयदुःख-हारिणी प्रसन्ना करणीया । सन्तुष्टा च सा दुष्टा नाशु विनाश्य पूरयिष्यति नो मनोरथान् । नान्यः कश्चिदुपाय स्तयोः प्रतीकाराय । (स्मृत्वा) किंचैतानि भगवतीवचनाक्षराणि-यदा यदा दानवबाधा भवित्री तदा तदाहं स्मृता सती भवत्सपत्न-नाशं करिष्यामि । नहि च भगवतीव्याहृति र्व्यभिचरितु मर्हति । (सर्वे सहर्षं भगवतीप्रकर्षं वर्णयन्तः परिक्रामन्ति ।)

इन्द्रः—अय मागतः श्रीमान् हिमवान् गिरिः । विलक्षण मेतस्या-रामरामणीयकम् ।

(परिक्रम्य पुरतोऽवलोक्य च) किंचात्रैव वहति

सैषा भगवती गंगा पूतांगाः स्नानतो यतः ।
संसाराब्धि मनायासं दुस्तरं संतरन्ति हि ॥४॥

किंच—गोविन्दचरणाम्भोजपूताया महतोभयात् ।
यस्या जलस्पर्शमात्रा दात्मानं त्रायते जनः ॥५॥

(पुनरन्यतोविलोक्य) अहो एषा पर्वतस्थली किमपि विमली-करोति चेतो यतो मुहुरवलोकितापि न चक्षु र कौतुकं करोति । तदिहैव भगवती हैमवती स्तोतव्या । (सर्वे निश्चलाँगा गंगाजलेनाचम्य स्तुवन्ति ।)

---

गत्वा भगवती दुर्गा शरणीकरणीया, व्याहृति वंचनं, आरामरामणीयकमुपवन-सौन्दर्यम्, सैषा लोकवेदप्रसिद्धेत्यर्थः । भगवती गंगात्र वहति । यत्र स्नानमात्रेण पूताङ्गाः सन्तो दुस्तरं संसारसागरमनायासं तरन्ति । किंच गोविन्द चरणाम्भोज-पवित्रायाः यस्या गङ्गाया जलस्य स्पर्शमात्रेण जनो महतो भयात्संकटादात्मानं रक्षति । विमलीकरोति पवित्रयति, चेतो मनः यस्मान्मुहुरवलोकिता

जय जय महिषमहासुरमर्दिनि ! रम्यकपर्दिनि शैलसुते ।
जय जय भक्तविपत्तिविनाशिनि ! शंभुविलासिनि ! पतिव्रते ॥६॥

जय जय दिव्यसुधाकरवदने ! जय जय कुन्दोज्ज्वलरदने ।
जय जय जितचरणद्युतिमदने ! जय जय कृतदुर्मदकदने ! ॥७॥

इन्द्रः—(कर्णं दत्त्वा) अये, कथमिवास्मत्कथनानन्तर मेव मणि-रणितानुकारी चेतोहारी कोपि कलकलः समुल्लसति ।

(विभाव्य)—नून मेतया गंगास्नानार्थमागतया कयाचिदवलया भवितव्यम् । तदल मितो दृष्ट्वा ।

(नेपथ्ये) भो भो देवा एषाहं महामाया निरपायाभिः युष्मत् स्तुतिभिः प्रसन्नास्मि जाता । तदल मनेन तपःक्लेशेन ।

इन्द्रः—कथमियं भगवती ! तदालोकयामि तावत् ।

सर्वे देवाः—देवराज, केयं सुवर्णाभवर्णा मूर्तिमतीव द्युतिरायाति ।

इन्द्रः—भो देवाः सैवास्माकं दुःखहारिणी महिषासुरदारिणी भग-वतीयं सर्वानपि नो मनोरथपूर्त्या संभावयिष्यति ।

(ततः प्रविशति भगवती)

(सर्वे बद्धाञ्जलयो भूत्वा गायन्ति)

---

दृष्टापि चक्षुः नेत्रम् । हैमवती पार्वती, कलकलो मधुरशब्दः समुल्लसत्या-विर्भवति । तदलमिति । इयं परस्त्रीत्वा न्न द्रष्टव्येत्यर्थः । निरपायाभिः पवि-त्राभिः कथ मित्याश्चर्ये । सुवर्णाभवर्णा कनकवर्णाङ्गी, द्युतिः छविः शोभा कान्तिर्द्युतिःछविरित्यमरः । संभावयिष्यति सत्करिष्यति, नोऽस्मान्देवान्

नमस्ते शरण्ये ! त्रिलोकीवरेण्ये !
महाधन्यधन्ये ! महेशादिमान्ये !
नमस्ते कराले ! महामुण्डमाले !
कृपालेशतः पातु नो भीतिकाले ॥ ८ ॥

इन्द्रः—अभिवाद्यसे त्वमद्य ब्रह्माद्यमरस्तुते देवि !
अभिवांच्छितं प्रसिध्यतु पार्वति ! न स्त्वत्प्रसादेन ॥ ९ ॥

देवी—देवराज, ज्ञातो मया सर्वोपि युष्माकमभिप्रायः ।
गच्छन्तु भवन्तः सर्वेपि निजावासं निराशङ्कम् ।

पूर्वं विधाय महिषं च कथावशेषम्,
त्रातं यथा त्रिभुवनं भवदाज्ञया मे ।
शुंभात्तथाद्य रहितान्यसुरा न्निशुंभा
ज्जम्भारिसूदन ! भवान् भुवनानि वेत्तु ॥ १० ॥

इन्द्रः—तथास्तु । इति सर्वैः सह निष्क्रान्तः ।

(ततः प्रविशति चण्डो मुण्डश्च)

एकः—सखे, मुण्ड, निसर्गरमणीयो हिमालयो नामायं पर्वतः ।
मुण्डः—सखे चण्ड, अतएवायं नगाधिराज उच्यते । पश्य—

विहगध्वनिकैतवादयं कुरुते स्वागत मागतस्य वै ।
अथ भृङ्गरुतेतिभाषते स्वसमीहासदृगस्तु वस्तु ते ॥११॥

---

पातु रक्षतु, अभिवाद्यसे प्रणम्यसे नोऽस्माकं अभिप्रायो मनोरथः निजावासं स्वस्वस्थानम् कथावशेषं विधाय हत्त्वा, त्रातं रक्षितं, मे मया निपातोयम् । जम्भारिसूदन ! जम्भाख्यमरिं सूदयतीतिजम्भारिसूदन, इन्द्र, तथा स्त्विति स्वीकारे निसर्गरमणीयः अकृत्रिमसौन्दर्यः । अयं हिमालयः भृङ्गरुता भ्रमरशब्देन, अत्र विहगादिध्वनिः स्वागतादिरूपेणोत्प्रेक्षितः ।

किंचास्तमनसमयोऽयं सूर्यस्य, यतः

पतङ्गोऽब्धिं प्रयात्येष अनङ्गो युवतीजनम् ।
कुरङ्गः स्वप्रियामेति भृङ्गश्च कमलोदरम् ।। १२ ।।

चण्डः—सम्यगुत्प्रेक्षितं भवता । इतोप्यक्षि निक्षिप । केयं सौभाग्यमयीव सालभञ्जिका सौन्दर्यदेवतेव शरीरिणी अस्य शिखरिणः शिखरे विलोक्यते ।

अहो रूप महो धाम अहो अस्या नवं वयः ।
नून मस्पृष्टपूर्वेयं देवै रथ च दानवैः ।। १३ ।।

किंच—वल्गुना केशभारेण मुखचन्द्रेण भास्वता ।
मनोहरेण हारेण मथ्नन्तीव जगन्मनः ।। १४ ।।

अपिच—उत्फुल्लमल्लिकामालां बिभ्रता शुभ्रवक्षसा ।
मन्दहासावलोकेन मन्मथस्यापि मन्मथा ।। १५ ।।

चण्डः—शृणु । वेधा व्यधाद्वस्तुनी द्वे कामिनीं कनकं तथा ।
मोहं न कुरुतो यत्र नृपशुश्च पशुप्रभुः ।। १६ ।।

मुण्डः—सखे चण्ड ! सुष्ठु भणसि, विलक्षणरूपैवैषा योषा । को नाम खल्वेतां दृष्ट्वा न प्रसाद मासादयेत् ।

मुण्डः—तदागच्छ, गच्छावो वृत्तमिदं स्वामिने निवेदयितुम् ।

(इतिनिष्क्रान्तौ) इति चतुर्थोऽङ्कः ।

---

अस्तमनसमयः अस्तंगमनकालः, पतंगः सूर्यः, अब्धिं समुद्रम्, अनङ्गः कामः, कुरङ्गो मृगः, भृङ्गः भ्रमरः, अक्षिनिक्षिप, पश्येत्यर्थः । सालभंजिका गुडिया इति भाषा, शिखरिणः पर्वतस्य अहोरूपं सौन्दर्यं, धाम प्रतापः, वल्गुना सुन्दरेण, भास्वता देदीप्यमानेन शुभ्रवक्षसा वक्षस्थलेन मन्मथस्य कामदेवस्यापि मन्मथा मोहयित्री, भणसि कथयसि, योषा स्त्री, प्रसाद मानन्दं आसादयेत् प्राप्नुयात् । तद्वस्तुद्वयं व्यधाच्चकार, कामिनीं सुन्दरस्त्रियं, कनकं सुवर्णम्, वेधाः ब्रह्मा यत्र यस्मिन् वस्तुद्वये, द्वौ मोहं न कुरुतः, तद् दृष्ट्वा मुग्धो न भवतः । नृपशुर्नरेषु पशुतुल्यो ना, पशुप्रभुर्भगवान् पशुपतिः शिवश्च । इति दुर्गाभ्युदयनाटकसंकेते चतुर्थाङ्कविवरणम् ।

## अथ पञ्चमोऽङ्कः

( ततः प्रविशति प्रतीहारः )

प्रतिहारः—चण्डमुण्डौ हिमालयोद्देशदर्शनार्थं गतौ चिरयतः। शुम्भो महाराजश्च तौ किमपि प्रष्टुकामः। समादिष्टश्चास्मि तेन यथा—"धूम्राक्ष! अद्य चण्डमुण्डौ हिमालयं द्रष्टुं गतौ स्वस्थाने समागतौ नवेति ज्ञात्वा त्वरित मागच्छ।" तत्तदाज्ञा मनुतिष्ठामि। (परिक्रामन्नग्रे दृष्ट्वा) अये, इमौ चण्डमुण्डौ स्वामिनं द्रष्टुमितएवागच्छतः तत्प्रतिनिवृत्य स्वामिने सूचयामि। (इति तथा करोति) (ततः प्रविशति चण्डो मुण्डश्च।)

उभौ—विजयतां महाराजः।

शुंभः—(दृष्ट्वा) चण्डमुण्डौ कथमिव भवन्तौ कमपि हर्षप्रकर्षमनुभवन्तौ विलोक्येते।

उभौ—महाराज! अस्ति किमपि कारणम्।

शुंभः—किं नाम ?

चण्डः—अस्ति काचन सर्वजनतोषा, अपरेव सितपक्षदोषा, स्त्री-मात्र कान्तिमोषा योषा।

मुण्डः—अहन्तु मन्ये—

इमं कर्तुं चन्द्रमसं तद्वक्त्रसदृशं विधिः।
पक्षद्वितयभेदेन करोति विकरोति च ॥१॥

---

चिरयतः विलम्वं कुरुतः, तौ चण्डमुण्डौ, अनुतिष्ठामि करोमि, सितपक्षदोषा शुक्लपक्षरात्रिः "दोषा नक्तं च रात्रा" वितिविश्वः। योषा—स्त्री, अहं तु मन्ये संभावयामि, विधि र्ब्रह्मा चन्द्रमसं भगवतीमुखसदृशं कर्तुं शुक्लपक्षे, करोति परन्तु न सदृशं दृष्ट्वा पुनः कृष्णपक्षे विकरोति खण्डयति। अद्यावधि साम्यं न

शुंभः—किमत्र साम्प्रतम् ।

मुण्डः—भवान् सर्वरत्ननां भाजनम् । अतश्च—

नाशयन्ती मदं स्त्रीणां भासयन्ती हिमाचलम् ।
स्त्रीरत्नमनवद्याङ्गी किमङ्गीक्रियते न सा ॥२॥

शुंभः—यद्येवं तर्हि शीघ्रमाहूयतां सुग्रीवनामा दूतः ।

चण्डः—तथास्तु । (इतिनिष्क्रान्तः)

दूतः—(प्रविश्य) जयतु जयतु महाराजः ।

शुंभः—सुग्रीव, त्वया हिमाचले गत्वा मद्वचना त्तत्रभवती देवी एवं वक्तव्या । त्रिलोकीश्वरः शुंभोनामासुरः भवत्यै सप्रेम सन्दिशति—यदहं त्रिभुवनानि जितवानस्मि । सर्वानपि च यज्ञभागानुपाश्नामि । सर्वेपीन्द्रादिसुरा मदाज्ञाकराः । सर्वाणि च तेषां रत्नानि मयापहृतानि । त्वं च नूत्नं स्त्रीरत्न मिति वांच्छामि ।

दूतः—(श्रुत्वा) यथादिशति महाराजः । (इति निष्क्रान्तः) ।

देवीपुरुषः—(प्रविश्य) भगवति, द्वारि स्थितः कश्चन विज्ञापयति देव्यै विज्ञाप्यं मे किंचिदस्तीति । परन्तु न ज्ञायते कोयं कुतोऽयं गूढचरो वा कश्चित्सन्देशहरो वा ।

देवी—ननु प्रवेश्यताम् । (देवीपुरुषो निष्क्रम्य पुनः तेन सह प्रविश्य)

देवीपुरुषः—इत इतो भवान् ।

---

प्राप कथमन्यथा प्रतिपक्षं क्षीयते वर्धते चन्द्रः । साम्प्रतं युक्तम्, स्त्रीणां मदं कमनीयतामदम्, तत्रभवती हिमाचले वर्तमाना, अस्ति भवति वर्तति विद्यतयः समानार्थाः । त्रिलोकीश्वरः त्रिलोकाधिपतिः शुंभोनामेत्यत्र नाम प्रसिद्धौ । सन्दिशति सन्देशो वाग्वाचिकम् । उपाश्नामि भुंजे यथादिशति यथाज्ञापयति, गूढचरो गूढप्रणिधिः सन्देशहरो दूतः ननु सम्बोधने ।

दूतः—(देवीमवलोक्य) इयं सा देवी, विविक्तस्थाने तिष्ठति। तदेनामुपसरामि। (इति तथाकरोति।)

देवी—(वीक्ष्य) भद्र, कुतस्त्वमायातः ?

दूतः—देवी ! शुंभस्वामिसकाशादागच्छामि।

देवी—कः खलु शुंभः ?

दूतः—अस्ति शुंभो नाम महाप्रभावो महासुरः।

देवी—(स्मरणमभिनीय) अस्ति। श्रूयते।

दूतः—तस्य सकलभुवनपरिवृढस्य दूतमाकलय माम्।

देवी—किमाह शुंभः ?

दूतः—श्रूयताम्। स खलु महाराजः चण्डमुण्डनामकभृत्याभ्यां त्वां स्त्रीकुलशेखरमणिं रमणीं विज्ञाय विज्ञापयति—"यदहं त्रिभुवनानि जितवानस्मि। (पूर्वोक्तं पठति) मम मत्कनीयसो निशुम्भस्य वा पट्टमहिषी भूत्वा त्वं परमानन्दं विन्दस्व।"

देवी—(सस्मितम्) दूत ! सुष्ठु ते भणितम्। त्वमिदानीं शीघ्रमेव गत्वा मद्गिरा निजमहाराजाय सूचय।

> खलचरित ! निकृष्ट ! दुष्टबुद्धे !
> किं बहुलेन बलेन लोभसे माम् !
> सकलखरबलिष्ठमप्यनिष्टं
> किममरगौः खरमीहते कदाचित् ?॥३॥

---

विविक्तस्थाने एकान्तमण्डपे, वीक्ष्य दृष्ट्वा, सकलभुवनपरिवृढस्य सकलभुवनपतेः, दूतं सन्देशहरं, मामाकलय मां जानीहि, भणितं वचनम् मद्गिरा ममवाचा 'गीर्वाक् वाणी सरस्वती"त्यमरः। सूचय कथय, खलचरितादीनि त्रीण्यपि संबोधनानि। मां देवीं, लोभसे प्रलोभसे, अनिष्टं स्वानभीष्टं, अमरगौः कामधेनुः खरं गर्दभमीहते पतित्वेन कल्पयितुमिच्छति कदाचिन्नैवेत्यर्थः।

किंच—

निशाचरो ऽसुरो वास्तु नरो वा किंनरो ऽथवा ।
यो मां जेष्यति संग्रामे भर्ता मे स भविष्यति ॥४॥

दूतः—(स्वगतम्) अहो, स्त्रियोप्यस्या ईदृशी धृष्टता । यत्सकलभुवन-जयिनं स्वामिनं शुंभमेव मधिक्षिपति । तदतः परं न सहिष्ये (प्रकाशम्) आ वृथाभिमानिनि देवि !

प्रतिकूलविधिस्तवाधुना यदिदं जल्पसि मत्प्रभुं प्रति ।
क्व स वै रणदुर्मदो भटः क्वचन त्वं नवपल्लवाकृतिः ॥५॥

किंच—

इन्द्रोपि न पुरः स्थातुमलं शुंभनिशुंभयोः ।
ययोस्तौ कथयन्त्येवं लज्जसे किं न बालिशे ! ॥६॥

देवी—दूत ! गत्वा, स्वामिने सूचय, मा बहुकथय ।

दूतः—त्वया मयोक्तया गन्तव्य मन्यथा ऽवहेलनया नयामि ।

देवी—(स्वगतम्) अहो, धृष्टता दुष्टदूतस्य, तदेनं निजमूर्त्यैव ताव-द्भीषयामि ।

(इतिकालिकारूपं कृत्वा, प्रकाशम् ।) आः तिष्ठ दुष्ट, स्वस्या-विनयस्य फलमनुभव । इति खड्गमुत्थापयतुमिच्छति ।

देवीपुरुषः—भगवति ! अभयं शरणागतस्य विशेषतो दूतस्य ।

दूतः—(कालिकारूपं दृष्ट्वा ससम्भ्रमं स्खलनमभिनीय निष्क्रान्तः ।)

(ततः प्रविशति शुंभः चण्डश्च)

शुंभः—चण्ड ! चिरं खलु कालो देव्याः सकाशं गतस्य सुग्रीवस्य,

---

निशाचरो राक्षसः, असुरो दानवः नरो मानवः, किंनरो गन्धर्वः, अधिक्षिपति निन्दति, मत्प्रभुं शुंभं, प्रतिजल्पसि कथयसि, स शुंभः त्वं देवी, पुरोग्रे, बालिशे मूर्खे, मूर्खवैधेयबालिशा इतित्रिकाण्डी । आः कोपे, आस्तुस्यात्कोपपीड़यो" रित्यमरः, चिर मित्यव्ययम् ।

नाद्यापि आगच्छति। (वामाक्षिस्पन्दनं सूचयित्वा—साशङ्कम्।)

नूनं कार्य मकृत्वैव सुग्रीवः संगमिष्यति।
स्फुरताऽनेन वामेन चक्षुषा मम सूच्यते ॥७॥

चण्डः—स्वामिन् ! नायमेकान्ततो नियमः।

स्वप्नं च शकुनं चैव सत्यं जानातु मा भवान्।
यतस्ते वस्तुतः काकतालीयं ददतः फलम् ॥८॥

दूतः—(प्रविश्य) अय मिह महाराजः तिष्ठति तदेनमुपसरामि। (इति तथाकरोति।)

शुंभः—(विलोक्य) अये, सुग्रीवोऽयं प्राप्तः। सुग्रीव ! दूरात्समागतोऽसि समास्व।

दूतः—ननूपविष्टोस्मि।

शुंभः—सुग्रीव ! कथय, कथमभूत्।

दूतः—देव ! तत्कार्यं न समपद्यत।

शुंभः—किं तया मदुक्तं न स्वीकृतम् ?

दूतः—अथकिम् !

शुंभः—किमाह सा ?

दूतः—तदप्यवाच्यम्।

शुंभः—नहि नहि यदुक्तं गुह्य मगुह्यं वा तदेव विशकलय्य कथय, सन्देहं च श्लथय।

---

संगमिष्यति अयास्यति, वामेन प्रसव्येन प्रतीपेन वा, निद्रामुपेतस्य विषयानुभवः स्वप्नः शकुनार्थः प्रसिद्धः। काकतालीयं न्यायः, समास्व उपविश; न समपद्यत न सम्पन्नम्, तया देव्या, अर्थांकि नैव स्वीकृत मित्यर्थः। अर्थांकि स्वीक्रियार्थकमिति भरतः। अवाच्यं कुवाच्यत्वान्न वक्तव्यमित्यर्थः। विशकलय्य

दूतः—यथाज्ञापयतिमहाराजः। ("खलचरित इति" "निशाचरो ऽसुरोवास्तु" इति च पूर्वोक्तं पद्यद्वयं पठति।)

शुंभः—(शोकवांछ्लोकंद्वयं श्रुत्वा सक्रोधम् ) कः कोत्र भोः ?

दौवारिकः—(प्रविश्य) आज्ञापयतु महाराजः।.

शुंभः—रक्ताक्ष ! धूम्रलोचन स्तावदाहूयताम्।

दौवारिकः—तथास्त्विति। (निष्क्रम्य धूम्रलोचनेन सह प्रविश्य) एष स्वामी तिष्ठति। उपसर्पंतु भवान्।

धूम्रलोचनः—(उपेत्य) जयतु, जयतु, महाराजः।

शुंभः—धूम्रलोचन ! त्वया बहुसेनया हिमाचलें गत्वा केशेषु गृहीत्वा सा दुष्टदेवी शीघ्र मानेतव्या। यदि कोपि नाम तद्रक्षणार्थमुत्तिष्ठेत् निःसन्देहं स हन्तव्यः।

धूम्रलोचनः—देव ! कः खलु खपुष्पायितः शशशृङ्गायितश्चास्ति यस्तां रक्षेन्मत्समक्षे ! सपद्यानयामि।

(इति निष्क्रान्तः)

(नेपथ्ये) भो भो देवीगणाः ! चेतयध्वम् चेतयध्वम्। नन्वयं—

शुंभाज्ञप्तः क्रुधा रक्तः प्रबलो धूम्रलोचनः।
सेनया सममायाति न जाने किं विधास्यति ॥६॥

धूम्रलोचनः—(प्रविश्य) भो भोः संमुखीना जनाः क सा देवी ? (सरोषविकटं परिक्रम्य देवीं विलोक्य च) भो भो मदनुचरा असुराः !

---

स्पष्टं श्लथय दूरीकुरु, रक्ताक्षेति दौवारिकस्य नाम। खपुष्पायितः आकाशपुष्पतुल्यः, शशः खरगोश इतिनाम्ना प्रसिद्धः तच्छृंगतुल्यः एतौ द्वावपि न भवतः। अयमति संनिकृष्टः क्रुधा रक्तः क्रोधेन रक्तवर्णः। संमुखीना जनाः देवीगणाः

एषा सन्तिष्ठते देवी यां समानेतुमागताः ।
शीघ्रता मवलम्ब्यैव गृह्यतां गृह्यतामिति ॥१०॥
(सर्वान् ग्रहीतु मुद्यतान्निवार्यं प्रथममथवैवं वदामि)
देवि ! त्वं गच्छ शुंभान्ते प्रीत्यैव कथयामि ते ।
नोचेदाकृष्य नेष्यामि बलात्त्वामबलामहम् ॥

देवी—यथा भवते रोचते ।

धूम्रलोचनः—(समीपमुपसृत्य) ग्रहीतुमिच्छति ।

देवीः—सरोषमुत्थाय खड्गेन प्रहरति ।

(ततः प्रविशति सम्भ्रान्तो महाहनुः)

शुंभः—(दृष्ट्वा) महाहनो ! कथं सम्भ्रान्तोऽसि ।

महाहनुः—भवते निवेदयितुं शीघ्रमागतोस्मि यत्·—

शुंभः—किंनाम सेनासमेतेन धूम्रलोचनेन पश्चादानीयते देवीति ?

महाहनुः—स्वामिन् ! क्व सम्प्रति धूम्रलोचनः ?

शुंभः—किमस्तं जगाम धूम्रलोचननाम ?

महा०—अथकिम् !

शुंभः—"हा सेनापते धूम्रलोचन !" इति शोचति ।

महा०—देव ! सम्प्रति शंकितव्यं प्रतिविधातव्यं वा ।

शुंभ—आः ! किमिह शङ्कया प्रतिविधानेन वा परमिदमाश्चर्यं मे यत्कथमेकया स्त्रिया ससेनो धूम्रलोचनः पराजितः ?

महा०—देव ! देव्या केसरिणा च ।

---

सन्तिष्ठते वर्तते यां देवीं समानेतुमागता वयमितिशेषः । शुंभान्ते शुंभसमीपे, हा विषादे, "हा विस्मयविषादयो" रिति विश्वः । शङ्कया अनिष्टागमोत्प्रेक्षया, प्रतिविधानेन प्रतिकारेण, एकया एकयैव, तत्रापि स्त्रिया अबलयेति ध्वन्यते । ससेनः प्रबलसेनासहितः, पराजितः मारितः, केसरिणा सिंहेन, सिंहो मृगेन्द्रः पंचास्यो हर्यक्षः केसरी हरि," रित्यमरः ।

शुंभः—केसरिणा किं कृतम् ?

महा०—देव्या खड्गेन धूम्रलोचनः ।

केसरी केशजलानि धुन्वानः पुरतः स्थितान् ।
जघान दानवान् कांश्चि द्गजान् किंच तुरङ्गमान् ॥१२॥

शुंभः—(उच्चैः) कः कोऽत्र भोः ?

दौवारिकः—(प्रविश्य) किमादेशो देवस्य ?

(ततः प्रविशतः चण्डमुण्डौ)

शुंभः—(विलोक्य) सकोपाटोपम् ।

हे चण्ड ! हे मुण्ड ! बलैः प्रबलैः सार्धमञ्जसा ।
दृष्टा भवद्भ्यां या दुष्टा ऽऽनेया सिंहं निहत्य सा ॥१३॥
मद्गिरा सेति वक्तव्या मूर्खे ! त्वं केन वंचिता ।
त्रिलोकजयिनं शुंभं निशुंभं जेतुमिच्छसि ॥१४॥
अष्टादशभुजत्त्वात्त्वं कुरुषे ऽखर्वगर्वकम् ।
निशुंभशुंभयोरग्रे किं भुजैरायुधैश्च किम् ॥१५॥
निःसंदिग्धं च प्रत्यक्षं सन्दिग्धानुमितौ किल ।
हित्वा प्रवर्तते नैव मानव्यथ च मानवः ॥१६॥

चण्डमुण्डौ—यथाज्ञापयति स्वामी । (इति निष्क्रान्तौ ।)

शुंभः—अहमपि सर्वमिदं निशुंभाय कथयितुं गच्छामि (इति महाहनुना सह निष्क्रान्तः ।) (इति निष्क्रान्ताः सर्वे ।)

इति पंचमोऽङ्कः ।

---

किमादेशः काज्ञा, दौवारिको द्वारपालः । बलैः सैन्यैः प्रबलै रुत्कृष्टबलैः अञ्जसा शीघ्रं 'अंजसा तत्वशीघ्रयो' रिति विश्वप्रकाशः । आनेया मत्पार्श्वमानेतव्या, पञ्चमोङ्क इति । अङ्कनिर्वचनं नाट्यशास्त्रे —"अंकइतिरूढिशब्दो नानाभावै रसैश्च युक्तत्वादिति । इति दुर्गाभ्युदयनाटकसंकेते पञ्चमाङ्कविवरणम् ।

# अथ षष्ठोऽङ्कः

(नेपथ्ये कलकलः)

**पिशाची**—अरे रुधिरप्रिय ! कीदृशोऽयं शब्दः श्रूयते ?

**पिशाचः**—रक्तपे ! देवी मानेतुमागतानामसुरभटानामेष घोषः ।

**पिशाची**—(सहर्षम्) तदागच्छ, आवामपि भगवतीशस्त्रनिपतितानामेषां रुधिरं पास्यावः ।

**पिशाचः**—तथास्तु ।

(नेपथ्ये पुनः कलकलः)

**पिशाची** रुधिरप्रिय ! पुना रवः श्रूयते ।

**पिशाचः**—(नेपथ्याभिमुखमवलोक्य) नन्वेतौ बहुसेनासमेतौ चण्डमुण्डा वागच्छतः । कदाचिदावामपि ताड़यिष्यतः इत्यन्यत्र गच्छावः । (इति निष्क्रान्तौ)

(इति प्रवेशकः)

(ततः प्रविशतः चण्डमुण्डौ)

**चण्डमुण्डौ**—रेरे ! देवीरक्षा-पक्षपातिनः तिष्ठत तिष्ठत, कृतमस्मद्दर्शनसाध्वसेन ।

यया पुराभिमानेन शुंभदूतस्तिरस्कृतः ।
ससेनो मारितश्चाद्य प्रबलो धूम्रलोचनः ॥१॥

---

घोषः शब्दः, एषा मसुरणां, रवः शब्दः, प्रवेशक इति ॥ "प्रवेशको भवेदत्र नीचपात्रप्रयोजित' इति ॥ अस्मद्दर्शनसाध्वसेन भयेन कृतमलं नास्माकं भयं किमपि कर्तव्यमित्यर्थः । यतो वयं न क्षुद्रप्रहारिण इति भावः । यया देव्या, पुरा पूर्वं, अभिमानेन गर्वेण, तिरस्कृतः तद्वचोऽस्त्रीकृत्य प्रत्यावर्तितः, ससेनः सेनासहितः

तामेवानेतुमधुना चण्डमुण्डौ समागतौ ।
भवद्भिः सहसा वाच्यं कुत्र सा सम्प्रति स्थिता ॥२॥

देवीपुरुषः—(सहसोपसृत्य) देवि ! श्रूयतां श्रूयताम् ।
महानेष कलकलः समुज्जिहीते । समन्ततः सन्तमसम-भवच्च ।

देवी—लामकायन ! धूम्रलोचनवधात्क्रुधा शुंभप्रेरितौ ससेनौ चण्ड-मुण्डा वेनौ प्राप्तौ । तदहमप्यधुना दुष्टदलदलनार्थमुद्यता भवामि । (इति यथोचितं तिष्ठति )

देवी—(शंखनादं कृत्वा उभौ दृष्ट्वा च) रे ! रे ! चण्डमुण्डौ ! अल-मलं बहुविकथ्य । इयमस्मि, शीघ्रमागत्य भस्मीभूयतां मत्क्रोधाग्नौ ।

चण्डमुण्डौ—( समीपमुपसृत्य ग्रहीतुमिच्छतः ।)

देवी—(खड्गमादाय) चण्डमनुधावति मुण्डं च ।

(प्रविश्य)

शुंभः—(नेपथ्याभिमुखमवलोक्य) कः कोत्र भोः ?

विरूपः—(उपसृत्य) जयतु जयतु महाराजः ।

शुंभः—विरूप ! कश्चिदागतः समरतः ।

विरूपः—(अभितो दृष्ट्वा) देव, दिष्ट्या वर्धसे । अयमनुप्राप्तो धूम्रकः ।

---

मारितोः हतः, तामेव देवीमिति शेषः भवद्भिः देवीगणैः वाच्यं वक्तव्यं सा देवी सम्प्रति कुत्रास्ते । कलकलः कोलाहलः समुज्जिहीते उत्तिष्ठति, समन्ततः सर्वतः सन्तमसं महान्धकारः, रहस्येकान्ते, विकथ्यात्मश्लाघां कृत्वा इयमस्मि अत्राहं तिष्ठामि, समरतः संग्रामात्, अभितः सर्वतः

शुंभः—(विलोक्य) धूम्रक ! सत्यं रथस्त्रोटितो देव्या चण्डमुण्डयोः ?

धूम्रकः—देव ! न केवलं रथो मनोरथोपि ।

शुंभः—( दीर्घं निःश्वस्य ) किमसंभवं सम्भावयसि ?

धूम्रकः—देव ! कथमसंभवं मन्यसे ? शृणु—प्रथममद्यचण्डवध-
स्ततो मुण्ड इत्यर्धोक्ते विरमति ।

शुंभः—हा ! वीरौ ! चण्डमुण्डा विति मूर्च्छति ।

धूम्रकः—महाराज ! समाश्वसिहि ।

प्रतिहारः—(प्रविश्य) देव, कश्चिद् द्वारमध्यास्ते ।

शुंभः—शीघ्रं प्रवेशय ।

(प्रतिहारो निष्क्रम्य पुनस्तेन सह प्रविश्य) इतइतो भवान् ।

दूतः—(प्रविश्य) अयमयं शुंभस्तदेनमुपसरामि । (इति तथाकरोति ।)

शुंभः—(विलोक्य) अरे ! कोऽसि त्वं ?

दूतः—अहमस्मि भैवो नाम देवीदूतः ।

शुंभः—भैवोऽथवा भैरवोसि ?

दूतः—रकार स्तवमुखे, पत्रमुद्घाट्य श्लोकं पठति ।

भो भोः शुंभ ! निशुंभ ! सन्दिशति वां सिंहस्थिता चण्डिका,
स्वाराज्यं लभतां शचीपति रथो सर्वाधिकारान्सुराः ।

---

मनोरथोपि त्रोटित इत्यनुषङ्गः । चण्डमुण्डावेव हताविति भावः । संभावयसि कथयसीत्यर्थः । विरमति शोकातिशयाद् विरामः । मूर्च्छति मोहं गच्छति, प्रतिहारो द्वारपालः । द्वारमध्यास्ते द्वारे तिष्ठति । वां युवां सिंहस्थितेति विशेषणमत्युत्कृष्टताध्वननाय । चण्डिकेति च क्रुद्धा सत्येव सन्दिशतीति भावः । शचीपतिरिन्द्रः,

पातालं द्रुतमेतमद्य युवयोर्यज्जीवनाय स्पृहा ।
सन्देहादथ चेन्नियोद्धुमनसौ शीघ्रं समागच्छतम् ॥३॥

शुंभः—(श्रुत्वा) विरूप ! गृह्यता मयं दुष्टदूतः ।

विरूपः—देव ! नायं नयः सौजन्यं च यद्दूतनिग्रहः ।

शुंभः—धिङ्मूर्ख ! किंनाम सौजन्यं, न जानासि माम् ।

असज्जनानामुदयाद्रिरस्मि सतां जनानामथ पर्वतोऽस्तः ।
न्यायेतराचारविधिप्रवृत्तासुराग्रगण्यः सुहृदां शरण्यः ॥४॥

दूतः—(श्रुत्वा) अरे ! रे ! निर्मर्याद ! अलमनया बहुविकत्थनया सत्यं ब्रवीमि—

नैवेदृशो भगवतीनिदेशो मम वर्तते ।
अन्यथा त्वामहत्वाजौ दूतोऽयं न गतो भवेत् ॥५॥

शुंभः—क्रोधेन स्वयं ग्रहीतुमिच्छति ।

दूतः—अन्तर्हितो भवति ।

शुंभः—विरूप ! मदाज्ञया शीघ्रतया—

सर्वं निवेद्य समराङ्गणवृत्त मेतत्,
देव्या नियोद्धुमधुनातिबलो निशुम्भः ।

---

एतं गच्छतम्, जीवनाय स्पृहा स्पृहेरीप्सित इति चतुर्थी । सन्देहात् स्वपराजये संशयं मत्वा, नियोद्धुमनसौ युद्धकामौ, "तुं काममनसोरपी" तिमकारलोपः । उदयाद्रिरुदयाचलः, पर्वतोऽस्तोऽस्ताचलः । न्यायेतरेति नीतिविरुद्धमाचरताम-हमग्रणीरेवेत्यर्थः । निदेश आज्ञा, आजौ युद्धे, अन्तर्हितः तिरोहितः, देव्येति सार्थे तृतीया । नियोद्धुं युद्धं कर्तुम्,

आदिश्यतां    नखरतःखरमुग्रदंष्ट्रं ।
सिंहं निहंतुमतुलः स च रक्तबीजः ॥६॥

विरूपः—यथाज्ञापयति देवः । देव, निशुम्भस्तु बलवानस्ति । रक्तबीजः कीदृग्बलो वर्तते ?

शुम्भ—शृणु,

तपसा तोषितस्य श्रीशिवस्य परमाद्भुतम् ।
वरदानमिदं ह्यस्य रक्तबीजस्य वर्तते ॥७॥
ये रक्तविन्दवो ह्यस्य पतिष्यन्ति शरीरतः ।
भविष्यन्ति तदाकरा नराः शतसहस्रशः ॥८॥

(विरूपः निष्क्रान्तः)

शुंभः—अहमपि यथोचितं कर्तुं गच्छामीतिनिष्क्रान्तः ।

(ततः प्रविशति दीर्घजानुः)

दीर्घ०—(समन्तादवलोक्य) अहह—

समस्तदानवकुले यन्म्लानत्वमुपागतम् ।
तन्मन्ये दानवानां श्रीर्गन्तुमिच्छति सम्प्रति ॥९॥

सत्यं दुर्निवारा भगवती भवितव्यता । इदानीमेव देव्या दूतद्वारेणोक्तं यत्—हे शुम्भ, सम्प्रत्यपि न किंचिद्गतम् । भवान् सकुटुम्बः पाताल मधिवसतु । परन्तु स दुर्णयः तृणवदभिमतजगत्त्रयः प्रेरितवानेव वत्सौ निशुम्भरक्तबीजावभियोद्धुम् । न जाने किं भविष्यति । (अग्रे दृष्ट्वा) कथं संग्रामवार्तामन्वेष्टुं प्रेरितेषु वक्रमुखः ?

---

आदिश्यता मनुज्ञायताम् । अस्य रक्तबीजस्य, स रक्तबीजः सा देवी तं रक्तबीजम्, इयं दुर्गा, म्लानत्वं मन्दता अभियोद्धुं युद्धं कर्तुं, अन्वेष्टुं ज्ञातुं

वक्रमुखः—(प्रविश्य) आर्य ! दीर्घजानो ! क भवता गम्यते ?
दीर्घ०—वत्स, संग्रामवार्तान्वेषणाय शुम्भसमीपे गच्छामि ।
वक्रमुखः—क्व सम्प्रति शुम्भः ?
दीर्घ०—(शान्तं पापं प्रतिहतममंगलम्)
वत्स ! कुतो भवानागतः ?
वक्र०—शुंभाय संग्रामवार्तामभिधाय समागतोस्मि ।
दीर्घ०—का संग्रामवार्ता ।
वक्र०—महावीरस्य निशुम्भस्य इत्यर्धोक्ते विरमति ।
दीर्घ०—वक्रमुख ! सत्यं वक्रमुखोसि । स्पष्टं कथय, किं निशुम्भस्य विजयम् ?
वक्र०—न न नहि ववबधम् ।
दीर्घ०—हा निशुम्भ ! (इतिमूर्च्छति)
वक्र०—आर्य, समाश्वसिहि समाश्वसिहि ।
दीर्घ०—रक्तबीजो विजयी !
वक्रमुखः—क्वेदानीं रक्तबीजोऽपि ?

स तेन वरदानेन शक्त्या हन्नम्बिकां रणे ।
गदयासा वारयामास सा वज्रेण जघान तम् ॥१०॥
तज्जातान् रक्तबिन्दून्सा भूमिपातान्न्यारयत् ।
पपौ स्वयं तत इयं ख्यातासीद् रक्तदन्तिका ॥११॥

दीर्घ०—वज्रपातसमानं समाचारमेनं श्रुत्वा कथमासीच्छुम्भः ?

---

अमंगलमशुभं प्रति-हतं नष्टं भवतु । अभिधाय निवेद्य, ननेति । शोके स्खलनम् । हा शोच्यावित्यर्थः । मूर्च्छां प्राप्तः मोहमुपगतः । अनेन करुणरसः प्रोक्तः, यदाहभरतः—' मूर्च्छाप्रला पैरुदनैः करुणाभिनयोभवेत्' ॥ कथंचिदतियत्नेन, कथंचिद्यत्नवादयोरितिविश्वः

वक्र०—इदमाकर्ण्य वारंवारं मूर्च्छां प्राप्तः कथंचिन्मन्त्रिभिराश्वासितः ।

दीर्घ०—मन्त्रिभिराश्वस्यमानः किमाह शुम्भः ?

वक्र०—शुम्भः सोद्वेगमाह—हे मन्त्रिणः !

सर्वशत्रुजयाशाया भारो यत्र प्ररोपितः ।
तयोरपि विनाशेऽद्य किमाश्वस्य भविष्यति ॥१२॥

दीर्घ०—सत्यमाह शुम्भः । ततस्ततः ?

वक्र०—ततो मन्त्रिणः प्राहुः । देव, कः पुनरिह प्रतीकारः । शुंभः प्राह । अस्तमिता सम्प्रति प्रतीकारकथा ।

दीर्घ०—सैषा परमा सीमा शोकानुबन्धस्य । ततस्ततः ?

वक्र०—ततो वारंवारं निःश्वस्य, हा भ्रातः ! सकलदानवकुलावलम्ब ! निर्विलम्बं मदाज्ञापालनैकनिपुण ! सकलगुणनिधे ! मद्विजयस्तम्भ ! निशुम्भ !

सर्वदा सर्वकार्येषु त्वमासीर्मदनुव्रजः ।
किमग्रे मामकृत्वा ते परलोकगतं मतम् ॥१३॥

अहह गरीयान्कालः ! अश्रुतमपि श्रावयति अदृष्टमपि दर्शयति ।

निशम्य समरे शक्रः यस्य ते विक्रमं सदा ।
चकम्पे क्षुभितो भूत्वा स्त्री त्वामद्य रणेऽहनत् ॥१४॥

भ्रातः ! शुंभो जीवतीति मैवं मंस्थाः । किन्तु—

---

सोद्वेगं, उद्वेगश्चात्रेष्टवियोगात् । यदाह भरतः—इष्टजनस्य वियोगादुद्वेगो विभवनाशाच्च, यत्र ययोः प्ररोपितो निहित आसीदितिशेषः तयोरपि निशुंभरक्तबीजयोः, अस्तमिता लुप्तप्राया, आसीरस्भुविलङ्, अनुव्रजः व्रजगतौ, पचाद्यच् । ते तव गतं गमनं भावे क्तः । मतमभीष्टमासीत् । निशम्य श्रुत्वैव, न पुनः दृष्ट्वा, शक्र इन्द्रः, इमां दुष्टदेवीं, यमालयं नीत्वा,

इमां यमालयं नीत्वा दुष्टदेवीं त्वदन्तिके ।
आगच्छामि विलम्बो य स्तं मम त्वं क्षमस्व वै ॥१५॥

दीर्घ०—(स्वगतम्) अहो, अद्यापि शुंभस्य जयाशा !
(प्रकाशम्) वक्रमुख ! शुंभो जेष्यतीति कः प्रत्ययः ?

यां चण्डश्चैव मुण्डश्च रक्तबीजोपि नाजयत् ।
महारथो निशुंभोऽथो शुंभोप्येतां कथं जयेत् ॥१६॥

वक्र०—एवमेव ?

तथाप्याशा बलवती तया सर्वः प्रवर्तते ।
निवर्तते न विज्ञोऽपि जयः स्याद्वा पराजयः ॥१७॥

पश्य,

दृष्ट्वापि महतीं शक्तिं श्री दुर्गायाः स्त्रियाः पुरा ।
निववृते न महिषो जयाशापाशसंयतः ॥१८॥

दीर्घ०—सम्प्रति किमारम्भः शुम्भः ?

वक्र०—इदानीमेव संग्रामाभिलाषेण महता रोषेण विपुलक्रोधैः सकलयोधैः समं संग्रामभूमिं गतवान् ।

दीर्घ०—तदावाभ्यामपि शीघ्रमेव गत्वा शुंभपार्श्ववर्तिभ्यां भवितव्यम् ।
(इत्युभावपि निष्क्रान्तौ) ।

इतिषष्ठोऽङ्कः ।

---

त्वदन्तिके आगच्छामीति प्रमादावस्था । 'जायावर्जं समस्तस्य याम्यः पन्था विभिद्यते, इतिस्मृतेः संगमासंभवात् स्वगतमिति । 'सर्वश्राव्यं प्रकाशं स्यादश्राव्यं स्वगतं मत मितिदशरूपकम् । प्रत्ययः विश्वासः यां देवीं चण्डमुण्डरक्तबीजनिशुंभादयो न जेतुमशक्नुवन् । तामेतां शुंभो जेष्यतीति को निश्चय इतिभावः । अथो अथ इत्यमरः । तया आशया, सर्वो जनः, विज्ञोपि जानन्नपि, महिषो महिषासुरः, न निववृते नैव युद्धान्निवृत्तोऽभूत् । इतिदुर्गाभ्युनाटकसंकेते षष्ठाङ्कविवरणम् ॥

## अथ सप्तमोऽङ्कः

(ततः प्रविशति गन्धर्वयुगल माकाशयानेन)

एकः—सखे ! स्पृहणीय ! बहोः कालात्परमनेन नभोमार्गेण संचरावहे ।

द्वितीयः—सखे दर्शनीय ! एवमेव ।

दर्शनीयः—अहह—महावीरस्य शुम्भस्य सिंहनादं श्रुत्वा विचित्रभंग्या पलायन्ते देवीगणाः ।

स्पृहणीयः—(विलोक्य) सखे ! पश्य पश्य, इयमागता भगवत्यपि ।

दर्शनीयः—शृणुवो देवीं दृष्ट्वा किं वदति शुम्भः ।

(श्रुतिमभिनीय) किमेवमाह—

आ दुष्टे ! त्रिदशसहायताप्रहृष्टे !
ये नीताः क्षयमसुरास्त्वयाद्य यावत् ।
अद्य त्वां नयति समक्षमाशु तेषा-
मेषा मे बहुतरतीक्ष्णखड्गधारा ॥१॥

स्पृहणीयः—देवी पुनरेवमाह—

अलीकवाचाल ! वृथातिगर्वित !
त्वमात्थ यत्सर्व महं विलोकये ।
गृहाण शस्त्रं निगृहाण वाङ्मयं,
जहीहि मानं जहि मां पुरः स्थिताम् ॥२॥

---

स्पृहणीय-दर्शनीयेति-गन्धर्वयोर्नामिनी । विचित्रभंग्या रीत्या, शृणुवः श्रोतुमिच्छावः, श्रुतिमभिनीय कर्णंदत्वा, आः क्रोधे, क्षयं नाशं, अद्य यावत् अद्यावधि, नयति नेष्यतीत्यर्थः । शीघ्रताद्योतनाय वर्तमानप्रयोगः । तेषाम सुराणां, समक्षं पार्श्वे, त्वमात्थ कथयसि यत्तत्सर्वम् विलोकये विलोकयिष्ये ।

स्पृहणीयः—शुम्भः सविस्मयमाह—

अहो प्रभावः कालस्य यन्मया योद्धुकाम्यया ।
योषित्तिष्ठति संग्रामे सार्धमेभिः प्रलापनैः ॥३॥

दर्शनीयः—विपक्षदुर्वचनत्रुट्यमानमानसा भगवतीदमाह—

"अरेरे ! दानवापसद ! अलमलं बहु प्रलप्य । यत्खलु—

मनुष्यत्वस्य गर्वेण स्त्रीत्वं त्वं मन्यसे तृणम् ।
तदहं युद्धतुलया निर्णयाम्यद्य यद्गुरु ॥४॥

अपि च रे ! दानवकीट !

सकलभुवनजेता, सर्वदैतेयनेता,
तृणमिव परिभूता यस्य गर्वेण सर्वे ।
रणशिरसि निजघ्ने स स्त्रिया नो मया किम्
महिषसुरविरोधी यत्त्वमेवं ब्रवीषि ॥५॥

स्पृहणीयः—(कर्णं दत्त्वा) किमेवं वदति शुम्भः—

आ दुष्टे ! कथं महिषासुर इव हीनसत्वो दानवो शुम्भः ? आम्, अतएव स्वप्रतापलवदुर्विदग्धा त्वं मत्तः संग्राममिच्छसि तदियं न भवसि ।

---

अहो आश्चर्ये, कालस्य समयस्य प्रभाव आश्चर्यजनक इत्यर्थः । यन्मयापि जितत्रिभुवनेनापि सार्धं सह योद्धुकाम्यया युद्धं कर्तुमिच्छया, योषित् स्त्री न तु कश्चिद्वीरः । सापि संग्रामे वीरभूमौ नान्यत्र, तत्राप्येभिः मम साक्षाच्छ्रूयमाणैः प्रलापनै दुर्वचनै रितिध्वन्यते । मनुष्यत्वस्य गर्वेण मनुष्यजात्यभिमानेन स्त्रीत्वं स्त्रीजातिं तत् स्त्रीत्वं मनुष्यत्वं वा, सर्वे लोकाः परिभूताः तिरस्कृताः, दुर्विदग्धा मत्ता, मत्तो मया, न भवसि, न जीवसि ।

दर्शनीयः—(सविषादम्) कथमुपक्रान्तमेव शुम्भेन ।

स्पृहणीयः—(सहर्षम्) कथं देव्यापि प्रत्युपक्रान्तमेव ।

दर्शनीयः—सखे, सम्प्रति सावधानमवलोकय, तुलाधिरोहः खल्वयं वीरलक्ष्म्या यन्नाम देवीशुम्भयोः संग्राम इति ॥

स्पृहणीयः—कोऽत्रसन्देहः ।

दर्शनीयः—(सकौतुकम्) वयस्य, पश्य तावत् ।

भगवतीशुम्भयोः सिंहनादं श्रुत्वा समागता ऽनेकमातंग कुरंगहर्यक्षऋक्षश्रृगालकोल-कोलाहलाहूतभूतवेतालचक्र-वालकण्ठनालप्रकटीभवद्घोरचीत्कारचमत्कारयुक्तेयं समरभूमिरवलोक्यते । तयोरेव सक्रोधपादन्यासप्रभूतभू-कम्पेन च सालरसालप्रियाल-तमाल-हिन्ताल-सुर-दारु-कोविदारकर्णिकारनिम्ब-कदम्बवकुलनिचूल-खर्जू-रवीजपूर-मधूकबन्धूक-कपित्थाश्वत्थवृक्षाः परिपतन्ति ।

स्पृहणीयः—वयस्य, इतोऽपि पश्य—

शुंभमुक्तानि शस्त्राणि देवी नयति रिक्तताम् ।
पौरुषं पुरुषस्येव नियतिः प्रतिपक्षिणी ॥६॥

अपिच—यानि दिव्यानि शस्त्राणि दुर्गा दुर्गतिहारिणी ।
मुञ्चते दानवो भिन्ते तान्येव सहसा रुषा ॥७॥

---

वराहः सूकरो घृष्टिः कोल इत्यमरः । एतेषां कोलाहलेनाहूता ये भूतवेताला स्तेषां चक्रवाला मण्डलानि । चक्रवालंतु मण्डलमित्यमरः । तेषां कण्ठनालेभ्यः प्रकटीभवद्घोरचीत्कारेण चमत्कार युक्तेत्यर्थः । सालादयो वृक्षभेदाः । परिपतन्ति रणभूमावितिशेषः । शुम्भमुक्तानि शुंभेन देवीं प्रति प्रक्षिप्तानि, देवी भगवती, रिक्ततां विफलतां नयति प्रापयति यथा प्रतिपक्षिणी प्रतिकूला नियति र्भाग्यम्, पुरुषस्य पौरुषं प्रयत्नमित्यर्थः सहसा शीघ्रमेव, रुषा क्रोधेन,

दर्शनीयः—सखे, सखेदोऽहमालोकयामि—

समं समंततो व्योम वाणवृष्ट्यान्धकारितम् ।
क्षत्वा सिंहस्थितां देवीमाच्छादयति दानवः ॥८॥

स्पृहणीयः—सखे ! कृतं विषादेन पश्य—

देव्या कुपितया शीघ्रमुत्प्लुत्य त्रिदशद्विषः ।
हस्तलाघवतो वाणासनं छिन्नं पतत्यदः ॥९॥

किंच—छिन्ने धनुषि दैत्येन या शक्तिः समुपाददे ।
देव्या चक्रेण साप्येवं छिन्नभिन्नत्वमापिता ॥१०॥

दर्शनीयः—वयस्य ! महद्विषमं पश्यामि—

छिन्नशक्तिर्महाबाहू राहुःचन्द्रकलामिव ।
देवीमाक्रामति क्रोधा द्दैत्ययोद्धा समन्ततः ॥११॥

स्पृहणीयः—किमत्र वैषम्यम् । पश्य—

शुंभस्य सारथिं हत्वा रथ्यानपि पतत्रिणः ।
तृणवत्सममेवैते देव्यास्तूणीरमाययुः ॥१२॥

अपिच—उत्प्लुत्य सहसा देव्या तलेनोरसि ताड़ितः ।
भूमौ निपतितः शुम्भः समाश्वसिति कृच्छ्रतः ॥१३॥

दर्शनीयः—अहह ! दारुणमुपस्थितम् !

दनुजोह्ययमाश्वस्य नेत्रे निष्कास्य मुष्टिना ।
प्रहर्तुं हृदये देव्या लघूत्थाय पलायते ॥१४॥

---

व्योमाकाशम् दानवः शुम्भः, त्रिदशद्विषः शुम्भस्य, वाणासनं धनुः, अद इत्यंगुल्या निर्देशः । शक्तिः शस्त्रविशेषः, समुपाददे जगृहे, आपिता प्रापिता नीतेत्यर्थः । क्रोधात् रोषात्, 'प्रतिकूलेषु तैक्ष्ण्यस्य प्रकर्षः क्रोध इष्यते । रथ्यान श्वान्, पतत्रिणो वाणाः समं युगपत्, तलेन करतलेन, उरसि वक्षसि, हृदये वक्षःस्थले 'हृदयं चित्तवक्षसोरिति नानार्थः । लघु शीघ्रं, गगनमाकाशम्,

